BHAṬṬÂKALAṄKA DÊVA'S

# KARṆÂṬAKA-ŚABDÂNUŚÂSANAM

with its vṛitti or gloss, named

## BHÂṢÂ-MAÑJARÎ

and vyâkhyâ or commentary thereon, called

## MAÑJARÎ-MAKARANDAḤ,

an exhaustive treatise on the grammar of the language,
completed in 1604 A.D.

भट्टाकलङ्क देव कृत

# कर्णाटक शब्दानुशासनम्

भाषामञ्जर्याख्यवृत्त्या मञ्जरीमकरन्दाख्यव्याख्यया च सहितम्

Edited by

B. LEWIS RICE, C.I.E., M.R.A.S.
Director of Archaeological Researches in Mysore:
late
Director of Public Instruction in Mysore and Coorg

BANGALORE
MYSORE GOVERNMENT CENTRAL PRESS
1890

# PREFACE

This standard work, now offered to the public, has never before been printed. The collection of manuscripts, with a view to its publication, was commenced by me nearly twenty years ago, but multifarious charges and duties have prevented the design from being brought sooner to completion. Moreover it was a laborious and difficult undertaking, and the printing alone has occupied several years. No one can be more conscious than myself of my incompetence to do justice to such a treatise, and numerous flaws will no doubt be found in spite of all the efforts to avoid mistakes. But yet the responsibility of bringing it to public notice seemed in an especial manner to devolve upon me, from my official position for so many years in Mysore and my consequent duty in regard to its language and literature. Had I not availed of the opportunities which now offered of giving permanence to the work through the agency of the press, there seemed but slight probability that it would ever be rescued from the oblivion to which, with many works as worthy of notice, it has hitherto been undeservedly consigned. I have now the satisfaction of seeing it at last completed, and of leaving it as a legacy to the Kannada people, in the hope that it may prove an incentive to a more scholarly study of their pithy (as their own early authors call it) and expressive language.

For manuscripts of the work I am indebted to Brahma Sûri of S'ravaṇa Beḷagoḷa, to Brahma Sûri Paṇḍit of Châmarâjanagar and to B. Mallappa of Mysore. Also to the Rev. F. Kittel for a copy of the sûtras and vrittis only, made for him at Mangalore. My sincere thanks are due to the following, who have revised all the proofs in the vernacular character, and without whose aid I could never have accomplished the work:— Buruḍaguṇṭe S'rînivâs Ayyangâr and Chinchôḷi Vênkaṇṇ Âchâri, Pandits of my office; Bêgûr Mallappa, Head of the Mahârâjah's Kannaḍa School, Mysore; Dhanvantari Bhîmâchârya and Ayyâ S'âstrî, Palace Pandit, both of Mysore. The transliteration into Roman characters was ably made many years ago by K. Rama Rao, of my office.

— Contd. on last page

I would, in conclusion, express my acknowledgements to Mr. K. Sheshadri Iyer, C.S.I., the enlightened Dewan of His Highness the Mahârâjah of Mysore, for his interest in the undertaking, and bespeak for the publication the indulgence of Oriental scholars, who will be able to estimate the labour involved in bringing out the first edition of a book of this kind.

LEWIS RICE

Bangalore, July 1890

# कर्णाटकशब्दानुशासन-सूत्रपाठः

## प्रथमपादः

1. सिद्धा हि शुद्धकाः।
2. औतस्स्वराः।
3. एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः।
4. स्वरस्य।
5. तपरस्तावान्।
6. कादयो व्यञ्जनम्।
7. मान्ताः पञ्चपञ्चवर्गाः।
8. अर्थवल्लिङ्गम्।
9. इहादयः।
10. नाव्ययशतृत्यदादि।
11. क्र्याद्यादशन्ः।
12. क्रियार्थो धातुः।
13. दुरन्त्यव्यञ्जनादिः।
14. पञ्चम्याः प्रत्ययः परः।
15. कृदजादिः।
16. मनिम्गेदत्तणिमदोक् सुप्।
17. अमरयिरेनेवु तिङ्।
18. सुप्तिङन्तम् पदम्।
19. वुदुमाद्यव्ययम्।
20. अणमादयः।
21. अमादयो निपाताश्च।
22. षष्ठ्या स्थानेऽन्त्यस्य।
23. शित्सर्वस्य।
24. तिङ्ढादेः।
25. किदन्त्यः।
26. तस्मिन्निति निर्दिष्टे पूर्वस्य।
27. तस्मादुत्तरस्य।
28. येन विधिस्तदन्तस्य।
29. प्रत्ययोऽसप्तम्याम्।
30. यस्मिंस्तदादेर्वर्णग्रहणे।
31. स्थानिवदादेशः।
32. अप्रयोगीत्।
33. स्पर्धे परम्।
34. सन्धौ।
35. यक् स्वरे स्वरस्य।
36. लुबनामहानौ।
37. रावोर्नक्।
38. आत ओष्ठ्ये।
39. ओदो बहुळम्।
40. दीर्घोद्दतोरुरद्वादेः।
41. प्लुतः प्रकृत्या।
42. रि।
43. आदे।
44. निपाताः।
45. औ निपाते।
46. पोसत्वादिः।
47. वेरदे।
48. करेदलि।
49. गडादिः।
50. श्लोकार्धम्।
51. अनुकरणम्।
52. अद् विकृत्या।
53. ह्रस्वान्नणलयळतटोऽनव्ययस्य लिङ्गान्त्यस्य द्विस्स्वराणामादेः
54. नेयुय्सुय्बयः।
55. कम्कुमि।
56. वारय्गेयः।
57. इतः पोऽच्चि।
58. को दपश्च तिङि।
59. तोर्नपः।
60. न समासे।
61. अक्ककुळः।
62. कृति।

63. इसुपि।
64. यो न्याल्लि।
65. रो द्विर्व्यञ्जनस्याद्यादेः।
66. लक्तोऽनन्तस्थायाश्च।
67. स्वरादरो व्यञ्जने।
68. मोः।
69. उकि।
70. लोऽन्तस्थायाम्।
71. क्कः।
72. वि वानेकस्वरस्य।
73. न लघ्वादिलघूपान्त्यादलो
गदवजो वृत्तौ।
74. वा गेगङ्ददपवगुमि।
75. कादलरः।
76. बर्दिलादयः।
77. मो नस्स्वरे।
78. नपि वा।
79. नश्च बिन्दुरन्यत्र।
80. तदन्त्यो वा वर्गे।
81. भुबनव्ययानुकरणस्य विसर्गस्य।
82. रुडोर्दौ रकं व्यञ्जने।
83. बहुस्वरस्य।
84. प्रत्यये।
85. वा गि।
86. न वि मुख्ये।
87. ह्रस्वादेरसमासे।
88. आरुमूरोः।
89. कतपस्तृतीय उत्तरपदादेः।
90. नादिष्टाद् रकः।
91. स्वराद् वः पवर्गस्य।
92. व्यञ्जनाद् वानादेशात्।
93. सश्चो बहुकमलयः।
94. संख्यायां द्दः।
95. णो नो णः।
96. अकः प्रकृत्या।
97. अविकृतेस्संख्यायाः।
98. ओंबतुपत्तोवरो वो बः।
99. अेंटोः।
100. ओम्बयो न।
101. बेसेकोल्लादयः।

द्वितीय पादः

102. स्त्र्यर्थः स्त्री।
103. पुमान् पुमर्थः।
104. नबन्यत्।
105. कक्त्रादयः।
106. एकत्वे जनोऽकुसुदुः परः।
107. सज्जनः कुलस्त्रियाम्।
108. ग्रहार्थः पुमांश्च।
109. वसन्तादयः।
110. देवतादयो नप्स्त्री।
111. भेद्यवद् भेदकम्।
112. परवद् द्वन्द्वः।
113. अंशि समासः।
114. निनेन्तानलिङ्गम्।
115. ह्रस्वोऽनेकस्वरस्यासमासेऽपूर्व-
पदस्य।
116. करुणादीनाम्।
117. रम्भायाः कदल्याम्।
118. अेदातः स्त्रियाम्।
119. पात्रस्य भाण्डे वा।
120. ऊष्मादीनाम्।
121. उद् रूपस्य।
122. ऋटतोऽरः।

123. ऋदारौ तुः ।
124. स्वस्रादेः ।
125. दातुरच्च ।
126. मान्धातम् ।
127. वेधसि ऋद्रौ विधातुः ।
128. सख्युरदायौ ।
129. व्यञ्जनस्यानब्जसन्तवल्लुप् च तस्य ।
130. नोऽश्वपथिमथः ।
131. ऋभुक्षयुवाध्वमघवजगतो वा ।
132. सोऽवसः ।
133. उगलोपे ।
134. वेयसः ।
135. उगबादीनाम् ।
136. वागादीनां स्वन्तवच्च ।
137. महदादीनां न्यपि ।
138. शषोर्वा सः ।
139. लो ळः ।
140. डो बहुळम् ।
141. यो जः ।
142. द्वितीयस्य प्रथमो वर्गाणाम् ।
143. तृतीयः प्रथमचतुर्थयोः ।
144. बमोर्वः ।
145. पो हश्च ।
146. वो बः ।
147. अगिगुग् व्यञ्जने व्यञ्जनस्य ।
148. लुप् कीलमीनकीरनीरकूरस्य ।
149. सस्थि ।
150. स्पर्शादिषु ।
151. सो वः ।
152. धो विन्ध्यवन्ध्यासन्ध्याध्याने ।
153. रो व्यञ्जने ।
154. पूर्वस्य व्यञ्जनात् ।
155. षः कः ।
156. ह्रस्वः स्वराणामादेः ।
157. ओदुतः ।
158. इदतः ।
159. रिरनुत्तरस्य ।
160. करम्बादयः ।
161. पिंदुमुंदोर्देस्तः ।
162. आंतेतोतं पुंस्यद्विदुदोः ।
163. स्त्रियामाकेदीकेदूकेत् ।
164. दोर्वः ।
165. पेरतोर्लुप् ।
166. अद् गुणोक्तेः ।
167. तोर्दः ।
168. ओक्दुपक्दोरेयः ।
169. पोसतोरंबः ।
170. केलवुपलवोरदबौ च ।
171. नितोर्बः ।
172. बरिदोरुवोंबौ ।
173. ओंबत्तुपत्तोस्तादिम् ।
174. आवुदोरार् ।
175. आवोनावौ चैकत्वे ।
176. वा नप्येतुः ।
177. केत्येच्च ।
178. ओन् ममोः ।
179. ओनचः ।
180. ओंदोः पुंस्योर्वश् ।
181. कुक् च स्त्रियाम् ।
182. अड्दाणाचः ।
183. लुप् च नः ।
184. अतोऽनेकत्वे चाद्यादिगुणोक्तेः ।
185. अनेयस्य ।
186. मगस्य ।

187. उक् सामान्ये।
188. दोः क्कक्नेकत्वे।
189. नार्विरि।
190. जातिशब्दादितिः।
191. पुंयोगे।
192. वडिगोगोक्गिात्।
193. गोगादिश्च।
194. अप्कात्।
195. आरतादेच्च।
196. वणिगवंतेच्चाल्।
197. सितगादिभ्यः।
198. शादितिः।
199. तिः।
200. वक्वक्कात्लुप् च।
201. कारगाराद् दोरश्च।
202. अरस्यादयः।
203. लिङ्गात् सुप्।
204. कर्मण्यम्।
205. गतिशब्दार्थोकर्मणां प्रयोज्ये कर्तरि।
206. बोधाशनावनतीनां वा।
207. कालाध्वनोरम् व्याप्तौ।
208. इम् सिद्धौ।
209. हेतुकर्तृकरणेत्थंभूतलक्षणे।
210. यद्भेदात् तद्भेदाख्या।
211. सहार्थेनाप्रधाने।
212. ओडने न।
213. गेदाप्ये देयैः।
214. शक्तिरुचीर्ष्यासूयाद्रोहक्रोधमत्सरभीत्युन्नतिस्वभावावनतीष्टानिष्टसादृश्यप्रतिनिध्यर्थैः।
215. आशिष्युद्देश्ये।
216. स्वाहास्वधावषड्भिः।
217. तादर्थ्ये।
218. उत्पातेन ज्ञाप्ये।
219. बगेतः कर्मणि वा यतोऽवज्ञा।
220. हेतावत्तणिम्।
221. अवधावपाये।
222. ओक्धिकरणे।
223. यतो निर्धारणम्।
224. साधुनिपुणार्थैः पूज्ये।
225. योगेऽद्।
226. कर्तृकर्मणोः कृतिभावे।
227. सुक्ते।
228. आमन्त्रणे।
229. यस्य भावो भावलक्षणम्।
230. विशेषणाद् वा।
231. व्यत्ययो बहुक्रम्।
232. गक्नेकत्वे सुपि।
233. नाड्वादिभ्यः कक्रुब् वा।
234. अेल्लाद् वुः।
235. अद्वादेर्दोर्लुप् च।
236. गुणोक्तेर्यश्च।
237. तो दः।
238. नानित्वादिभ्यः।
239. स्त्रीपुंसादर्दिर्विर् बहुकम्।
240. तोक्तु पेंडादिर्।
241. संख्याया वर्।
242. तेभ्यः कक् वा।
243. संस्कृतादिर् च।
244. गक्द्वादेः।
245. निनो विशेषणस्य कय्किरैकानेकत्वे सुपः।

246. अेनः केन्केव्।
247. श्लुबव्ययस्य।
248. वृत्तेः।
249. न वोल्वोलि।
250. अनतो वा।
251. मः।
252. अेच् चामन्त्रणे।
253. वेरोऽनेकत्वेऽवुकत्लुपः।
254. दीर्घः।
255. अदः।
256. अमो नः।
257. अतो मग् गेद्दिरि।
258. गक्कि।
259. नप्यमि च बहुळम्।
260. नक् स्वरे।
261. दगिमादौ नपि।
262. वीवोः किन् वा।
263. पगलिरुक्कः।
264. आगक्कीगक्कोर्नित्यम्।
265. कण् दिक्छब्दस्य।
266. कृतोऽरुरुतः।
267. भावे वुदोः।
268. संख्या परिमाण गुणोक्तेः।
269. अद्वादेः कित्।
270. वोः।
271. वात्तणिमो देज्दक्कौ।
272. इमः।
273. अेश्चातो नपि।
274. गेतः क आदेः।
275. रोर्विकृतात्।
276. कुग् वा।
277. ओकश्शल्लिः।
278. श्लुबुतः कालार्थात्।
279. अमः।
280. ओक् मश्चातो दिगर्थाच्छल् च।
281. अेश्चोतः।
282. तन्निनेनो मनेकत्वे।
283. मो मक् स्वरे।
284. अक् तुत्तुगोति।
285. वादस्तुत्तू।
286. संख्यायामुतुश्च।
287. मि दीर्घः।
288. आदेनः।
289. उम् समुच्चये परोऽनदः पदात्।
290. ओक्गेतोरम् च।
291. अमः प्रागमः।

तृतीय पादः

292. समर्थः पदविधिः।
293. सुप्सुपा समासो बहुळम्।
294. कृत्संख्याऽद्वादि गुणोक्तिस्संस्कृतेन च।
295. तच्च बिरुदावळ्याम्।
296. कडुरागादयः।
297. सूक्तं पूर्वम्।
298. अमकृत् तिङा।
299. कृता।
300. इम् करणे।
301. सहार्थेन।
302. गेत् तदर्थेन।
303. भीत्यर्थेनात्तणिम्।
304. अद्।
305. ओक् साधुनिपुणार्थेन।
306. अंशिनाभिन्नेन।

307. संख्या समाहारे।
308. ङ्युक्तं कृता तद्धितौ नित्यम्।
309. विशेषणमेकार्थेन।
310. अन्यार्थे बहुव्रीहि नित्यम्।
311. ओका।
312. मिथो ग्रहणे प्रहरणे च युद्धे सरूपम्।
313. वावाराथे संख्येये संख्यया संख्या।
314. द्वन्द्वः साहित्ये।
315. समानामेकः।
316. अद्वादिः।
317. तन्निनेन्।
318. स्त्रीपुन्नप्।
319. तन्देस्ताया वा।
320. एकवद् द्वन्द्वः।
321. जात्याख्यायामनेकवत्।
322. तिङ् तद्वाचि।
323. अेन्।
324. पूजोपहासे।
325. प्रतिनिर्देश्यम्।
326. संख्येयमेकवत्।
327. अब् बहुव्रीहेः।
328. अट् स्वरात्।
329. इश्चागादिभ्यः।
330. इल्लात्लुप् च।
331. आक् च युद्धे पूर्वपदस्य।
332. अरस्वादीनां दोर्लुबुत्तरपदे।
333. कृद्गुणोक्तेः पूर्वस्वरेणैकार्थे।
334. अेदेस्तत्रानिनादेः।
335. दीर्घः स्वरे।
336. न गुरोः।
337. किरस्तः।
338. नडो दौष्टः।
339. कड्निडः।
340. किरश्च कुण्येञ्जने।
341. केच्च् पच्च् बेच्चश्चामः।
342. केमः कश्चो वा।
343. अेतेसुबैमश्चौर्यादिषु च।
344. कृतो मो गदबज्यनकि।
345. अग् बहुकम्।
346. कम् नणः।
347. कः कुम्।
348. दोर्मो शिन्यडिमेगोः।
349. लुप् पिन्दुमुन्दोः।
350. नित्यं मेवरि।
351. अेण्टुनाल्कैदोरद्वन्द्वे।
352. मूरोः।
353. ह्रस्वस्तत्र वा।
354. मेवरि।
355. आरोः।
356. लुप् सासिरैकोः।
357. शित्।
358. ओरों दोः।
359. अेरडोरिर्।
360. स्वरे मुय् मुरोः।
361. ओंबत्तोस्तोम् पत्तौ।
362. ओंबय् नूरुसासिरे।
363. पयिन् पत्तोः।
364. पन्नोंदौ।
365. अेरडौ।
366. पदिमूर्वादि षट्के।
367. पदेर्नेक् स्वरे।
368. केळ्गोः कीळ्किनौ।
369. किरिदुबेट्टितुपेरगोः कुरुबिरुपेडं।
370. आदीदूदद्विदूदोः।

371. आगेल्लस्य वा।
372. कोंकौ: कुङ्:।
373. महतो मा व्यञ्जने।
374. सहस्य सा।
375. अेक्कमेकस्यासंस्कृतेऽपि।
376. त्रिचतुरोस्तिचौ वा तद्धिते च।
377. द्वेर्दुद्।
378. कीलारादीनि यथोपदिष्टम्।
379. मक् पेरग्वादीनाम्।
380. च्यातावुत:।
381. अत:।
382. संस्कृतस्य नित्यम्।
383. गुक्कि बौलि।
384. उतो गारे।
385. सम्भ्रमेऽसकृत्।
386. सातत्यक्रियासाकल्याभीक्ष्ण्ये द्विः।
387. नानावधारणे।
388. आधिक्ये।
389. तुदिमोदल: पूर्वस्यादिस्वरात् तस्च।
390. कडेनडोष्ट्:।
391. दोरद् गुणोक्ते:।
392. गोर्व्यञ्जनादेर्लुप्।
393. चातोर्बहुस्वरस्य।
394. वानुकरणे।
395. केळगुमेगो: सामीप्ये।
396. मोदलोऽन्यतोऽतिशये।
397. वीप्सानुपूर्व्ये सुप: श्लुप्।
398. तिङश्चाबाधे।
399. वाक्यादेरामन्त्रितस्यासूया-
सम्मतिकोपकुत्सनभर्त्सने-
ऽन्यतरस्य प्लुतश्च।
400. दूराद्धाने बहुकम्।
401. वाद्यात् तद्धित:।
402. तदस्यास्त्यस्मिन्निति वंत:।
403. गुणोक्ते: कौ दुलुप् च।
404. आकि: शीलम्।
405. इग: पण्यम्।
406. शिल्पम्।
407. तदाचरति।
408. वेत्रद्ययेत्रौ:।
409. क्रीणद्विक्रीणतो:।
410. कुर्वल्युक्किगश्च।
411. गारो जातौ।
412. र: कम्मकुंबात्।
413. देवादडिगोर्हति।
414. गुक्किर्गृह्णाति।
415. तेन जीवति गवणिगो।
416. वडिगो जातौ।
417. पानोर्दुलुप् च।
418. तत्रेगो नियुक्ते।
419. भवजातयो:।
420. इचो ह्रस्वश्चोपान्त्यस्य।
421. दिक्छब्दादण:।
422. दश्चेत:।
423. कार: प्रवणव्यापृतयो:।
424. व्यञ्जनादुग:।
425. आद्योऽधिकृते बहुकम्।
426. नळवळौ।
427. मडे जातौ।
428. तस्य तुल्ये वोल्वोलौ।
429. वातो बोल्।
430. भावे तन:।
431. उन्नतादिभ्य इकेत्।
432. गुणोक्ते: पु: पूर्वस्वरेण दुलुप् च।

433. संख्याया भेद् वारे।
434. परिमाणाच्चान्येयः पूरणे।
435. अद्विदूदोर्नितुः परिमाणे दोर्लुप् च।
436. अेवश्मेवरेगं कालस्य नश्च।
437. प्रकारे तुट्टुतेतवः।
438. काले द्रुः।
439. अेनावुदोरेतेषु।
440. अेद् नितौ।
441. गाविलादीनि यथोपदिष्टम्।

चतुर्थ पादः

442. धातोरेकानेकत्वेऽमरयिरेनेवलो-ऽन्यसुष्मदस्मासु कर्तरि।
443. कर्मणि।
444. बेङ्वादेरप्रधाने।
445. इसुपः प्रयोज्यकर्तरि।
446. दपदवं तिङि सद्भूतभाविनि।
447. अचि।
448. सति वो वा।
449. अेनोदुवूद्वक्त्तौ।
450. नोक्ः सत्तायाम्।
451. बलोऽवबोधने।
452. आदेशे।
453. अक्मः स्त्रियाम्।
454. नप्युदुः।
455. अचः।
456. उवुरनेकत्वे।
457. अरः।
458. वेल्वित्त्वत्तवोऽमो भूते।
459. उदूवोष्ट्वव्रूक्ः सत्तायाम्।
460. औरत् प्रतिषेधे।
461. औदयो वा।
462. अेवोरेन्।
463. अमरोर्गुम्।
464. गुगुमेकेषाम्।
465. आशीर्विधिनिमन्त्रणामन्त्रणा-ध्येषणसम्प्रश्नप्रेषणविज्ञापना-ज्ञापनप्रार्थने गेत्।
466. इरश्च वुदुः।
467. इम्।
468. अयोऽल्लुपौ।
469. उच्चेरः।
470. अेवोर्वम्।
471. अेनो वेन्।
472. वागुपोग्विसुब् रलक्नणो गः कः।
473. अवुतवोरिद् वि।
474. पण उङ् नियोगे।
475. णिग् दि।
476. इदुतः।
477. ईसस्त्तग्घ्रस्वश्च।
478. कीक्केक्बीकाक्काणः।
479. बेमीनोर्नक् च।
480. तवोर्दोः पः।
481. मुदोस्तः।
482. मिदेरवघाते।
483. अेक्चर्वासरूबेसरोः।
484. रोलेध्वादेर्द्विस्वरस्य।
485. गोः कः।
486. सोश्चः।
487. डोष्टः।
488. पडलिङ्नादेः।
489. उगुपुगुकुडुतुडोरोद् ध्रस्वः।
490. इसुबिसुगिरुकिरुकिडोरेत्।
491. कोल्सलो नः।

492. तर्बेरोरिमि च।
493. निलो वा।
494. कोक्ो णः।
495. टौ।
496. वागोश्शप् पि।
497. अश् पो ह्रस्व।
498. शक कि।
499. दोर्लुप् पोगोः।
500. आगोश्च दित्तौ।
501. इतावेर्यश्च।
502. तागोश्च वि वा।
503. सोर्बेहुस्वरस्य।
504. कि।
505. उण्कोक्काणो दो डः।
506. वर्गप्रथमात् पूर्वः।
507. कवलादिभ्यस्तः।
508. ओरे अरे स्रावशोषणयोः।
509. निलो लः।
510. नेलो वा।
511. पोडतोडमिकिबेकपसकसो-
स्युद्यदिबियडरो वः पः।
512. काकुगोनेत बरः।
513. ओपुतव्वोः।
514. आदिष्टाद् रकः।
515. लुप्त दोः।
516. नः।
517. नानेन्तिनो बः।
518. णः।
519. तर्बेरोर्लुब् लुप्तेऽयि।
520. दीर्घः।
521. प्रतिषेधे।
522. न तिङः।
523. तदर्थस्याप्रयोगः।
524. आशीरादौ बेडंबेडौ परतः।
525. वेमः।
526. तस्मिन्नदलौ।
527. वेमः।
528. अल् तदप्रयोगे।
529. प्राक् प्रयोगे चाविकृतात्।
530. कर्मण्यनुपडुः।
531. कृति वा।
532. तस्मिन्नेदलौ।
533. इसुप् तत्करोति भावेल्युट्योऽशयनादे-
र्लुप् च दोः।
534. इय् च नमनादिभ्यः।
535. भोगादिभ्यः।
536. धातोर्हेतुमति।
537. क्रश्चुर्वा।
538. स्वार्थे।
539. भुंजादेरिसुप्।
540. ऐसुस्तगरादिभ्यः।
541. इसुपीसुपः श्लुबस्वार्थे।
542. वेस्मियः।
543. अच् कर्तृकर्मणोः।
544. उतेदुत्तेदुतुमुत्तुम् सत्यचो वा।
545. कुकिस्ताच्छील्ये।
546. इरुणः कर्मणि।
547. कोल उद्ध्रस्वश्च।
548. कुड्डोरिगो डुलुप् च।
549. अद् भावे।
550. किडोरेद्दीर्घश्च।
551. औल् कुडुतुडोः।
552. लुप् तस्य।
553. ईनीयस्तः।

554. भण्यादिभ्यः।
555. गुक् पोय्बयः।
556. आयारयः केत्।
557. नलरणरुभ्यः।
558. क्वः।
559. तेदनेकस्वरात्।
560. ओगुपोगुमिगोः।
561. अेतः पः।
562. कुदिमिदितक्वितोक्तितिकिभ्यः।
563. बक्के बेक्कतोरव्यसू।
564. उड्वादिभ्यो गेत्।
565. बेड्वादेरिक् च।
566. पस्यादेर्वुः।
567. ककादेरक् च।
568. ओंदुनंद्धं जुकल्कंदुपोंदोरिकेत्।
569. मोद्वादिभ्यो वा।
570. डोरकिडुकुडुतुडोः।
571. बल्जल्कूभ्यौ मेत्।
572. तर्बरः कुक् च।
573. ओकामेभ्यः पुः।
574. पोक्गोर्दुलुप् च।
575. सुर्मुनिकिनिमुक्लिभ्यः।
576. साल्बानोन्मीभ्योऽहुपिहः।
577. कोल्नगोरेत्।
578. इसुप् तिनः।
579. धातोर्वुदुः।
580. प्राक्काले दुस्तुल्यकर्तृकात्।
581. इदुतोऽलघ्वादिद्विस्वरात्।
582. अदेत् प्रतिषेधे।
583. वाक् चेरः।
584. अद्धदादागोरनर्हत्वे।
585. अलर्हार्थे।
586. क्रियायां क्रियार्थायाम्। (*)
587. यो भावो भावलक्षकः।
588. वुदुमेवन्नं वन्नेगं विनं विनेगम्।
589. भूते दोडेद् वा।
590. वोडेत् सद्भाविनि।
591. केगलः।
592. ओडनेदोडमलोऽणु।

(*) cf अष्टा० (3.3.10)

20/3/94
20.3.94

26.12.92 10:38pm

# कर्णाटक शब्दानुशासनम्

## सिद्धा हि क्षुद्रका: ॥1॥

वृत्तिः॥ अकारादयो वर्णाश्क्षुद्रका स्ते हि लोकप्रसिद्धा एव वेदितव्याः॥
प्रयोगः॥ ಅ ಇ ಉ ಋ ಎ ಒ ಐ ಔ ಕ ಖ ಗ ಘ ಙ ಚ ಛ
ಜ ಝ ಞ ಟ ಠ ಡ ಢ ಣ ತ ಥ ದ ಧ ನ ಪ ಫ ಬ ಭ
ಮ ಯ ರ ಲ ವ ಶ ಷ ಸ ಹ ಳ ॥
लोके हि यावंतोवर्णा यादृशश्च सन्निवेशास्तदाश्रयणेनैवेदं शास्त्रं प्रवृत्तमिति सूचनाय सूत्रमिदमारब्धः॥ सामान्यावलंबनाद्दीर्घादिपरिग्रहः॥

## औतस्स्वराः ॥2॥

वृत्तिः॥ आऔतः औत इत्यभिविधावाङः प्रश्लिष्टनिर्देशः॥ अकार-प्रभृत्यौकारपर्यंता वर्णाः स्वरसंज्ञा भवन्ति॥
प्रयोगः॥ ಅ ಇ ಉ ಋ ಎ ಏ ಐ ಒ ಔ॥ दीर्घप्लुताश्च। स्वर प्रदेशाः यक्स्वरे स्वरस्ये (35) त्येवमादयः॥

## एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥3॥

वृत्तिः॥ स्वरा इत्यनुवर्तते। एकद्वित्रिमात्राः स्वरा यथाक्रमं ह्रस्व दीर्घ-प्लुत संज्ञा भवन्ति॥
प्रयोगः॥ ಅ1 ಆ2 ಆ3 ಇ1 ಏ1 ಏ3 समवचने यथासंख्य शैलीयं सूत्रकृतः॥ स्वरा इति किम्। संयुक्तव्यंजन द्वयादेर्माभूत्॥ स्वरग्रहणं पूर्वत्र स्वरूप परमप्यत्रानुवर्तमानं संज्ञि परं संपद्यते। शब्दाधिकारश्रवणात्॥ ह्रस्वादिप्रदेशा ह्रस्वादेरसमासे (87) दीर्घस्वरे (35) प्लुतः प्रकृत्या (41) इत्येवमादयः॥

## स्वरस्य ॥4॥

वृत्तिः॥ ह्रस्वदीर्घप्लुताः स्व संज्ञया शिलष्यमाणाः स्वरस्यैव स्थाने वेदितव्याः॥
उग्गु पुग्गु कुडु तुडोरोद्घ्रस्वः (489)॥
प्रयोगः॥ ओक्कं। पोक्कं। कोट्टं। तोट्टं॥ अमोनः (256)। कल्लानेरिदं। बिल्लानेरिसिदं॥
(147), (135), (327), (146), (547), (120), (545), (177), (542), (546), (485), (489), (22), (506), (485), (487)

## तपरस्तावान् ॥5॥

वृत्तिः॥ तः परोयस्मात्सोयंतपरः। स चेह शास्त्रेयावानुपात्तस्तावानेव ग्राह्यः। अतोमगगे द्विरि (257)॥
प्रयोगः॥ अण्णंगे। तम्मंगे। अण्णंदिर्। तम्मंदिर्॥ इह न भवति। ज्याणे। मागे। ज्यादिर्। मादिर्॥ अकारादिवर्णग्रहणे दीर्घादीनां ग्रहणाय जातिपक्षावलंबने नेदं शास्त्रं प्रवृत्तमिति सर्वत्र तथा प्राप्ते सूत्रमिदमारब्धः॥ (257), (57), (252), (254)

## कादयो व्यंजनम् ॥6॥

वृत्तिः॥ ककारादयो वर्णा व्यंजनसंज्ञा भवन्ति॥

प्रयोग: ॥ [illegible] ....
[illegible] ॥ व्यंजनप्रदेशा: स्वरादरोऽव्यंजन (67) इत्येवमादय: ॥

## अंता: पंचपंचवर्गा: ॥7॥

वृत्ति: ॥ ककारादयो मकारपर्यंता वर्णा: पंचपंचभूत्वा पंचैव वर्गसंज्ञा भवन्ति ॥
प्रयोग: ॥ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म ॥
वर्गप्रदेशा: तदंत्योवावर्ग (40) इत्येवमादय: ॥

## अर्थवल्लिङ्गम् ॥8॥

वृत्ति: ॥ अर्थोऽभिधेय: । अर्थवच्छब्दरूपं लिङ्गसंज्ञं भवति ।
प्रयोग: ॥ जेल । पोल । घट । पट । तंबुलिग । सर्वेन्दिग । औपगव । ग्रैवेयक । अरमने ।
सूक्तेरि । राजपुरुष । बहुधन । काण्के । पुण्के । कुंभकार । यजमान ॥ अर्थवदिति किम् ॥
वनं धनमित्यादावनर्थकस्य वन्धनादि भागस्यापि लिङ्गसंज्ञायां लिङ्गान्तस्ये (53)
ति द्विर्वचनं मा भूत् । लिङ्गप्रदेशा: लिङ्गात्सुबि (203) त्येवमादय: ॥

## इहादय: ॥9॥

वृत्ति: ॥ इह इत्येवमादयश्शब्दा लिङ्गसंज्ञा भवन्ति ॥
प्रयोग: ॥ इह । अमुत्र । परत्र । उभयत्र । अस्ति । स्वस्ति । नास्ति । वृथा । मुधा । झटिति ।
इति इहादिराकृतिगण: ॥ निषेधयिष्यति नाव्यये (10) ति तस्यायं पुरस्तादपवादो
योग: ॥ बहुवचनमाकृतित्वसूचनार्थम् ॥

## नाऽव्ययशतृत्यदादि ॥10॥

वृत्ति: ॥ अव्ययानिशत्रन्तास्त्यदादयश्शब्दा लिङ्गसंज्ञा न भवन्ति । अव्ययानीहशतृत्यदादि
साहचर्यात्संस्कृतान्येव गृह्यंते । नासंस्कृतानि । तेन हलुबव्ययस्ये (247) त्यादाव
प्रसक्ति दोषो नावकाशं लभते ॥
प्रयोग: ॥ उच्चैस् । नीचैस् । स्वर् । प्रातर् । रणत् । पठत् ॥ त्यद् । तद् । यद् । अदस् । एतद् ।
किम् । युष्मद् । भवत् । इति त्यदादि: ॥

## द्व्याद्यादशन: ॥11॥

वृत्ति: ॥ द्विशब्दात् प्रभृति दशन् शब्दपर्यंता: शब्दा लिङ्गसंज्ञा न भवन्ति ॥
प्रयोग: ॥ द्वि । त्रि । चतुर । पंचन् । षट् । सप्तन् । अष्टन् । नवन् । दशन् । द्व्यादीति किम् ।
एकमं । एकदिं । आदशन इति किम् । एकादशमं । द्वादशमं ॥

## क्रियार्थो धातु: ॥12॥

वृत्ति: ॥ क्रिया व्यापार: पूर्वापरीभूत: साध्यतामापन्नोऽपि सोऽर्थोऽभिधेयोयस्य स
क्रियार्थ: । स शब्दो धातुसंज्ञो भवति ॥
प्रयोग: ॥ अडु । कुडु । माडु । नोडु । अडिसु । कुडिसु । अलर्चु । तोऽर्चु । पूरैसु ।
सोर्केसु ॥ धातुप्रदेशा: धातोर्हेतुमती (536) त्येवमादय: ॥

9.6.1991

दुरन्त्यव्यञ्जनादि : ॥13॥

वृत्तिः ॥ शब्दरूपेष्वन्त्यव्यंजनाद्यवयवोदुसंज्ञो भवति ॥
प्रयोगः ॥ दुप्रदेशाः दोः ककनेकत्वे (183) इत्येवमादयः ॥
व्याख्या ॥ नामधातुविशेष निरपेक्षशब्द मात्रावस्थायिव्यंजनमध्येयदन्त्य-व्यंजनं तत्प्रभृतेरवयवस्यैव संज्ञित्वमित्याह शब्दरूपेष्विति ॥ यद्यपि अन्त्यव्यंजनादीति नपुंसकनिर्देशोलघुः । तथाप्युत्तरत्रदोरिति सर्वत्र पुल्लिंगेनैव निर्देक्ष्यते । तदनुरोधादत्रापि पुन्निर्देशइति ॥ नचैतदनुरोधा-त्तत्रापिनब्निर्देश्यमितिवाच्यम् । सर्वत्रदुनइति नब्निर्देशादत्रैकत्रैव पुन्निर्देशोलघुरिति ॥

पञ्चम्याः प्रत्ययः परः ॥14॥

वृत्तिः ॥ इहशास्त्रेपंचमी निर्देशाद्योविधीयते स प्रत्ययसंज्ञो भवति ॥ सच तस्मात्परत एव भवति । ओकामेभ्यः पुः (573) ॥
प्रयोगः ॥ ओपु । कापु । मेपु । अत्स्वरात् (328) । मेल्लेर्दयम् । पेरेवणेयम् ॥ पंचम्या इति किम् ॥ आगमादेशयोर्माभूत् ॥ प्रत्ययप्रदेशाः प्रत्यये (84) इत्येवमादयः ॥ (28),(274),(208),(213),(41),(31),(443),(328)

कृदजादि : ॥15॥

वृत्तिः ॥ अच्कर्तृकर्मणोरि (543) त्यारभ्ययेप्रत्ययावक्ष्यंते तेकृत्संज्ञा भवन्ति ॥
प्रयोगः ॥ भाक्पम् । नोक्पम् । काण्के । पूण्के ॥ अजादिरिति किम् ॥ वासिसिदम् । भासिसिदम् । कृत्प्रदेशाः कृतौ (62) इत्येवमादयः ॥ (86),(544),(227),(537)

गमिम्गेदत्तणिमदोक् लुप् ॥16॥

वृत्तिः ॥ म् अम् इम् गेत् अत्तणिम् अद् ओक् एतेप्रत्ययाः लुप्संज्ञा भवन्ति ॥ लुप्प्रदेशाः लिंगात्लुबि (203) इत्येवमादयः ॥ (274),(275)

अमरयिरेनेवु तिङ् ॥17॥

वृत्तिः ॥ अम् अर् अय् इर् ओन् ओवु एते प्रत्ययास्तिङ् संज्ञा भवन्ति ॥ तिङ्प्रदेशाः अमकृतिङे (295) इत्येवमादयः ॥

सुप्तिङन्तम् पदम् ॥18॥

वृत्तिः ॥ सुप्तिङन्यतरप्रत्ययान्तं शब्दरूपं पदसंज्ञं भवति ॥
प्रयोगः ॥ जिनं । जिननं । जिननिं । जिनंगे । जिननत्तणिं । जिननं । जिननोक् । कण्डं । कण्डर् । कण्डय् । कण्डिर् । कण्डें । कण्डेवु । अंतग्रहणमन्यत्र संज्ञाविधौ तदन्तविधिर्नभवतीति ज्ञापनार्थम् । तेनेह न भवति । अमरयिरेनेवु तिङ् (17) ॥ पदप्रदेशाः कतपस्तृतीय उत्तरपदादेरि (89) इत्येवमादयः । (260),(257),(79),(442),(446),(505),(478);(28),(17),(15),(8)

## बुदुमाद्यव्ययम् ॥१९॥

वृत्तिः॥ अन्तमिति वर्तते। बुदुमादि गणपठित प्रत्ययान्तं शब्दरूपम् अव्ययसंज्ञं भवति॥

प्रयोगः॥ बर्पुदुम्। तर्पुदुं। बर्प्पिनं। तर्प्पिनं। बंदु। तंदु। बुदुम्। अे। वन्नेम्। वन्नेगम्। विनम्। विनेगम्। उते। उत्ते। उतुम्। उत्तुम्। दोडे। बोडे। अदे। अदु। अत्। आत्। अल्। इत्। दु। अेवरं। ओवरेगं। बोल्। वोल्। बोल्। मेत्। तुडु। ते। तु। इतिबुदुमादि॥ अव्ययप्रदेशाः श्लुबव्ययस्ये (257) त्येवमादयः। (588), (549), (589), (590), (582), (584), (585), (526) (531), (546), (530), (433), (436), (428), (429), (433), (571), (437), (559),

## अणमादयः॥२०॥

वृत्तिः॥ अणमादि गणपठिताश्शब्दा अव्ययसंज्ञा भवन्ति॥

प्रयोगः॥ अणं। आणं। आवगं। नीडुं। करं। आदं। केन्नं। पीनं। अेल्लं। अल्लं। इल्लं। चेच्चरं। बेच्चरं। निन्नेरं। सोडंबाडं। अेगं। वरं। वलं। वल्लं। बेरं। बक्किं। बक्किक्कं। बक्कियं। बेडं। गडं। गकं। बेक्पकं। बेक्पडं। उक्किं। ओडं। निक्कुवं। तेनं। तेनतेनं। अनुं। पोक्तडं। सवक्तडं। डुं। अं। डं। पिरिडुं। मुन्। इन्। पिरुडु। नीडु। निन्नेर। बेड। ओडने। नाके। नाडिदु। मत्ते। मत्तिन। बेरे। ओन्। अेगुवेन्। ओवेन्। मेण्। दल्। मोंकल्। अंते। अंतिरे। अंतेवोल्। अंतिरेवोल्। अंतेवोल्। अंतिरेवोल्। वृत्। गड। गक। अल्तु। अल्ल। इल्ल। इल्लदे। अल्लदे। आगड। ईगड। पोक्तड। तडबड। अक्कट। अकट। अहह। बकिके। बक्किक्के। मोंकने। चक्कने। भोरने। पयकने। बयकने। पौवने। पौवगे। नेट्टने। नेट्टगे। तोट्टने। तोट्टगे। आयकने। आयकगे। तिर्रने। तिर्रगे। गिर्रने। गिर्रगे। घुंमने। घुंमगे। बिंमने। बिंमगे। मेल्लने। मेल्लगे। कम्मने। कम्मगे। तण्णने। तण्णगे। तुण्णगे। इत्यणमादिराकृतिगणः॥ प. पृ. 49

## ओमादयो निपाताश्च ॥२१॥

वृत्तिः॥ ओमादिगणपठिताश्शब्दा अव्ययसंज्ञा निपातसंज्ञाश्च भवन्ति॥

प्रयोगः॥ ओम। नाडे। ओडे। नेरे। मिगे। कडु। अः। आः। अ। आ। उः। ऊः। उ। ऊ। ओ। ओ। हो। अहो। ओहो। होहो। अय्यो। अय्यो। ओले। ओले। ओलमे। ओलमे। अरे। अरमे। अरेबुकि। अल्ते। आल्ते। चिः। चीः। निन्ने। मोन्ने। गडा। गका। अक्कटा। इति ओमादिराकृतिगणः। निपातप्रदेशाः निपाताः (44) इत्येवमादयः॥ 10.27 AM

31.12.92 5.30 PM

## षष्ठ्यास्थानेऽन्त्यस्य ॥२२॥

वृत्तिः॥ स्थानेयोगा षष्ठी तन्निर्दिष्टस्य यद्विधीयते तदन्त्यस्य भवतीति

(23),(24),(274),(291),(138),(141),(139),(142),
वेदितव्यम् ॥ (२३),(२४),(१४), (५१८),(५२८),(२०६),(१२८),(१२०),(३६)
प्रयोगः॥ सख्युरदायौ (१२८), सखं, सखायं ॥ ऊष्मादीनाम् (१२०) ऊष्मे ऊष्मं ॥ स्थान इति किम् । यत्रावयवावय विभाव सम्बन्धे षष्ठी तत्र माभूत्॥

## शित्सर्वस्य ॥२३॥

वृत्तिः॥ शिदादेशः षष्ठ्यन्तस्य सर्वस्य स्थाने भवति॥
प्रयोगः॥ ओकश्शल्लिः (२७७), गृहदल्लि, वनदल्लि॥ ओक्मश्चातो दिगर्थाच्छल् च (२८४) । मूडल्, पडुवल्॥ शिदिति किम् । ओदातः स्त्रियाँ (११४) माले, बाले॥ (२६),(२५७)

## तिङः श्वादेः ॥२४॥

वृत्तिः॥ तिङः श्वादेश्च यद् विधीयते तत्षष्ठ्यन्तस्य सर्वस्य भवति॥
प्रयोगः॥ नप्युदुः (454), माड्दिदुदु, कूडिदुदु॥ अरः (457), माड्दिवु, कूडिदुवु॥ आदीदूदद्विदूदोः (370), आमाल्के, ईमाल्के, ऊमाल्के॥ आवुदोरार् (174), आरं, आरिं॥ अदु, इदु, उदु, आवुदु, ओल्ल, पेरतु, इत्यश्वादिः॥ अशिदर्थोयोगः॥ (442),(446),(476).

## किदन्त्यः ॥२५॥

वृत्तिः॥ किद्यस्य विधीयते स षष्ठ्यन्तस्यान्त्यावयवो भवति॥
प्रयोगः॥ यक्स्वरे स्वरस्य (३५) । मुनि–ईतं, मुनियीतं, यतियिंदं॥ रामोर्वक् (३७) । वधुविं, पितृविं॥ (१६२)

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥२६॥

वृत्तिः॥ सप्तमी निर्देशेन षष्ठ्यन्तस्य विधीयमाने कार्यं पूर्वस्यैव भवति॥
प्रयोगः॥ यक्स्वरे स्वरस्य (३५) । मुनियीतं, सतियवक्, पतियीतं॥ आत ओष्ठ्ये (३८) । आवूर्, आवोले॥ निर्दिष्टग्रहणमानन्तर्यार्थं । तेनेह न भवति । अरलिदु, सरलिदु॥

## तस्मादुत्तरस्य ॥२७॥

वृत्तिः॥ पंचमीनिर्देशेन षष्ठ्यन्तस्य यत्कार्यं विधीयते तदुत्तरस्यैव भवति॥
प्रयोगः॥ दीर्घाद्धोरुरश्वादेः (40) । आरुषि, ईरुतु॥ रोर्द्विर्व्यञ्जनस्याहादेः (६५) । इवर्बन्दर् । अवर्पोदर्॥ उत्तरस्येति किम् । व्रतं, त्रासं॥ अत्रापि निर्दिष्टग्रहणानुवृत्तेरिह न भवति । इवर्क्षत्रियर्, अवर्स्वच्छन्दर्॥

## येन विधिस्तदन्तस्य ॥२८॥

वृत्तिः॥ येन विशेषणेन विधिर्विधीयते तत्तदन्तस्य संज्ञा भवति॥
प्रयोगः॥ जातिशब्दादितिः (११०) । ब्राह्मणिति, शूद्रिति॥ कृतोरुतः (२८८) । माक्पुदरिम्, नोक्पुदरिम् । येनेति विशेषणस्य मा भूत् । (३५), (११०), (३६).

2.133

## प्रत्ययो सप्तम्याम् ॥२९॥

वृत्तिः॥ सप्तमीनिर्देशव्यतिरिक्त विषये प्रत्ययस्तदन्तस्य संज्ञा भवति।
प्रयोगः॥ अप्कात् (194)। निडुगण्णि, निडुवेरलि, बडकि। मुडुकि॥ अनेयस्य (185)। ओदनेयक्, अेरडनेयक्॥ असप्तम्यामिति किम्। गळनेकत्वेधुपि (232)। सुबंत इति माभूत्॥ विशेषणार्थोयमारम्भः॥

## यस्मिंस्तदादेर्वर्णग्रहणे ॥३०॥

वृत्तिः॥ योवर्णस्सप्तम्या निर्दिश्यमानो विशेषणं स तदादेस्संज्ञा भवति॥
प्रयोगः॥ शक्कि (498)। अक्कुं, अक्के॥ णिगिदि (475)। पण्णिदं, पण्णिदुदु॥
यस्मिन्निति किम्। षष्ठीनिर्देशे माभूत्॥ वर्णग्रहण इति किम्। पन्नोंदो (364)।
पन्नोंदु॥ ओंदुशब्दादौ माभूत्॥ (28), (478), (463), (472), (475), (446), (454)

## स्थानिवदादेशः ॥31॥

वृत्तिः॥ स्थानं प्रसंगः। यस्य स्थाने यो विधीयते स स्थानी। इतर आदेशः।
स्थानिवद् भवत्यादेशः। स्थान्याश्रये कार्ये कर्तव्ये स्थानिकार्यं भवत इत्यर्थः॥
प्रयोगः॥ ओळशल्लिः (277)। मनेयल्लि॥ शल्च (280)। मूडल्। सुप्तिङन्तं पदमि (18) ति पदसंज्ञा सिद्धा भवति॥ अचः (455)। माळ्पुदरिं, नोळ्पुदरिं।
कृतीरुरुतः (266) इति कृत्कार्यं सिद्धं भवति।

## अप्रयोगीत् ॥32॥

वृत्तिः॥ इहोपदिष्टोवर्णो यः प्रयोगे न दृश्यते स इत्संज्ञो भवति। अतएव चास्य प्रयोगाभावः सिद्धः। उपदेशस्तु कार्यार्थः॥
प्रयोगः॥ रावोर्वक् (37)। ओळशल्लिः (277)। कशावितौ। इत्प्रदेशाः शित्सर्वस्य (23) इत्येवमादयः॥

## स्पर्धे परम् ॥33॥

वृत्तिः॥ तुल्यबलयोर्विधानयोरेकत्र सन्निपातस्स्पर्धः। तत्र परं कार्यं बलीयो भवति॥
प्रयोगः॥ आत औच्ह्ये (38)। आवूर्, आवुदकं॥ आदे (43)। आअरसं, आअंचि।
आऔत्कण्ठ्यं इत्यत्र वक्प्रकृतिभावयोः प्राप्ता परत्वात्प्रकृतिभावः। वो न भवति॥

## सन्धौ ॥34॥

वृत्तिः॥ अधिकारोयम्। परस्सन्निकर्षः सन्धिः। यदित ऊर्ध्वमनुक्रमिष्यामस् तत्संधिविवक्षायां भवतीतिवेदितव्यम्॥
प्रयोगः॥ वक्ष्यति यक्स्वरेस्तरस्य (35)। मुनियीतं, यतियीतं॥ सन्धाविति किम्॥
मुनि, ईतं। यति, ईतं। अरमगनिर्प्पि ओलगदओलगकार्तियरेल्लरोप्पिदर्॥

श्लो॰॥ पदे तु संहिता नित्या नित्या धातूपसर्गयोः।
नित्या समाने वाक्ये तु सा विवक्षामुपेक्षते॥

## यक्स्वरेस्वरस्य ॥35॥

वृत्तिः॥ स्वरे परे स्वरस्य यग्भवति। ककारोन्त्यविद्यर्थः॥
प्रयोग:॥ ज्या-ओक्, ज्यायोक्। एवं आयिरवु, सतियिवक्, पतियीतं, स्त्रीयीके, श्रीयिरवु, सीतेयिंदं, मातेयिंदं, तेयिंदं, बेयिंदं, रैयोदवित्तु, सुरैयोम्पिदं॥ स्वर इति किम्। पतिनोडिदं, सतिकूर्तक्॥ स्वरस्येति किम्। अदलिदु, सरलिदु॥

## लुब नाम हानौ ॥36॥

वृत्तिः॥ लोपनं लुप्। स्वरे परे स्वरस्य लुब्भवति। न चेल्लोपे नामहानिः॥
प्रयोगः॥ ओन्न-अरसं, ओन्नरसं। एवं तन्नाक्, गुणदिरवु, सुखदोडेयं, मनेयल्लिर्द, कूडुण्ड, कण्डेविदं, कूडिदक्, क्रमदायतु, सेसिंगोडेयं॥ अनामहानाविति किम्। सतियिवक्, पतियीतं। नामहान्यहानी च शिष्टप्रयोगादवगन्तव्ये॥

## रावोर्वक् ॥37॥

वृत्तिः॥ ऋवर्ण, ऌवर्ण, औकार, उवर्णानां वग् भवति स्वरेपरे॥
प्रयोगः॥ होतृ-इं, होतृविं। एवं मातृविं, गृविं, गृविन, ऌवेंदं, ऌवेंदं, नौविदु, ग्लौविदु, वधुविक्कु, गुरुवीतं, भ्रूविदु, भ्रूवोक्कित्तु॥ रावोरिति किम्। सतिय, पतिय॥ लुबनामहानावि(36)त्यनुवृत्तेस्तत्र लुबेव भवति। कण्डेविदं, माडिदक्॥

## आत ओष्ठ्ये ॥38॥

वृत्तिः॥ ओष्ठ्ये स्वरे परे आकारस्य वग् भवति॥
प्रयोगः॥ आ-उदकं, आवुदकं। एवं आवूर्, आवोले, आवोले॥ कंठ्यौष्ठ्ये प्योष्ठ्य ग्रहणेन गृह्यते॥ ओष्ठ्य इति किम्। आयिरवु, आयेल्लं॥ आत इति किम्। ईयूर्, ईयोक्कल्।

## ओदो बहुलम् ॥39॥

वृत्तिः॥ ओवर्णस्य बहुलं वग् भवति स्वरे परे॥
प्रयोगः॥ ओ-ऐदं ओवेंदं। एवं नोवेंदं, गोविदं॥ बहुलग्रहणादिह न भवति। नोयिसिदं, तोयल्॥ दकारो निर्देशार्थः॥

## दीर्घाद्धतो रुरद्व्यादेः ॥40॥

वृत्तिः॥ दीर्घान्तादद्व्यादेर्गणात्परस्य ऋकारस्य रुशब्द आदेशो भवति॥
प्रयोगः॥ आ-ऋतु, आरुतु। एवं, आरुषि, आरुण, ईरुषि, ईरुतु, ऊरुतु, ओल्लारुतुगळ्, ओल्लारुषियर्॥ दीर्घादिति किम्। अदु ऋतु, इदु ऋटणं, ओल्लऋतुगळ्॥ अद्व्यादेरिति किम्। देवा ऋषियरं नोडु, पितृगळा ऋटणं॥ ऋत इति किम्। आ ऋकारं, ई ऋकारं॥

## प्लुतः प्रकृत्या ॥41॥

वृत्तिः॥ प्लुतसंज्ञिका वर्णाः स्वरे परे प्रकृत्या तिष्ठन्ति। पूर्वोक्तसंधिलक्षणकार्यभाजो न भवन्तीत्यर्थः॥

प्रयोग: ॥ अक्का उ इल्लि बा, अण्णा इत्त बा। प्लुत इति किम्। चिलेसेंदु, छन्नु बित्त बा॥

रि ॥42॥

वृत्ति: ॥ ऋवर्णे ऌवर्णे च परे स्वर: प्रकृत्या तिष्ठति॥

प्रयोग: ॥ आयनद ऋतु, आ ऋकारं, मुनि ऋद्धिप्राप्तं, स्त्री ऋतुमति, क्रतु-ऋत्विजर्गे, भू ऋजुवल्लु, पितृ ऋणि, ऋषिगे ऋद्धि, दैत्र ऋद्धं, गोऋषिगे, ग्लौ ऋक्षपति, ओन्दु ऌकारं, आतन ऌकारं॥ अप्लुतार्थोयमारम्भ:॥

आदे ॥43॥

वृत्ति: ॥ आकार: अवर्णे परे प्रकृत्या तिष्ठति॥

प्रयोग: ॥ आ अरसं, आ अंचे, मृडना अर्धेंदु, सतिया आयल्कं॥ ऐदौतो-र्विश्लिष्टावर्णत्वात्तत्रैव भवति। आ ऐश्वर्यं, आ ऐलबिलं, आ औन्नत्यं, आ औगु॥

निपाता: ॥44॥

वृत्ति: ॥ निपाता: स्वरे परे प्रकृत्या तिष्ठन्ति॥

प्रयोग: ॥ अरमे अरल्दतावरे। अरे ओडे हस्ति शिक्षण विचक्षणर्। ओले इदल्ते तुहिन क्षोणीध्रं। अय्यो इदे किंतादुदु। रय्य मावुदो अदरिं। अहो इरलिं पेरवर महत्वं। अय्यो इंद्रं गेल्केडाय्तु। होहो ओमगु मिंताय्ते। आ: ओंतेंतो कब्ब मोक्किताय्तु। अनेनो ओदिन परिलेखु लेखु। ओडरिदनो अवननो सल-क्करं तोडेदुदु। मुक्तिदनो इंदुकोंटेद्दू कीपद्दं। निनगक्केम अबज गर्व भिजायुं श्रीयुं। सिंग मक्केम अंजे। आना इम्मेडिया ओरक्कुदुरेया इर्व्वंगर्गे रक्कैदुवा पाला अमर्दा इंजें। आनेयो आद्रियो। निजमन: प्रियनप्पि दनो अगल्दनो। आतने इंद्रं। आतने ईतं। ईतने ईवं॥ निपाता इति किम्। अक्कटक्क टंतादुदे। अहहे दत्तकसी ते॥ 10.25 2.15

ओ निपाते ॥45॥

वृत्ति: ॥ अवर्णो निपातस्वरे परे प्रकृत्या तिष्ठति॥

प्रयोग: ॥ आतन ओ, अवक ओ, आतन ओ तोरतोडेगक्, कंतुव आ: कब्बु-बिल्लनीतं मुरिदं, सतिया आ: कण्णबेक्क गिदुदिकेयं, अन्ना उ: पापफलं॥ अ इति किम्। वनितेगेयु: इंतु पोदुवे तनु मनगक्। ग्लौवा: करमोप्पिदं नभो मंदिरदोळ्॥ निपात इति किम्। बुधर्, सुरर्॥ अनिपातार्थोयोग:॥

पोसत्वादि: ॥46॥

वृत्ति: ॥ अ इति वर्तते। पोसत्वादिरकारान्तस्वरे परे प्रकृत्या तिष्ठति॥

प्रयोग: ॥ पोस अडके, पोस आने, ओक अंचे, पोर अडि, ओक आळ्, पक अलगु॥ पोसत्वादि रिति किम्। ओक्काक्कळ्, ओल्लंगनेयर्॥ अ इति किम्। पोसतडके, पक्कदलगु॥ पोसतु, पोरगु, ओकगु, पक्कदु, ओक्कदु, इति पोसत्वादि:॥

वैरदे ॥47॥

वृत्तिः॥ अदे इत्यविभक्तिकोयं सप्तमीनिर्देशः। अदे शब्दे परे इर् इत्ययं धातुरकारान्तो वा प्रकृत्या तिष्ठति॥

प्रयोगः॥ इर अदे, इरदे॥ अदे इति किम्। नीनिरिल्लि। नीनिक्किरिल्लि॥ अ इति किम्। इरदे॥ इर्गाइणं स्पष्टार्थः॥ (583)

करेदलि ॥48॥

वृत्तिः॥ अ इति निवृत्तं॥ करे इत्ययं धातुरल्प्रत्यये परे वा प्रकृत्या तिष्ठति। तकारो निर्देशार्थः॥

प्रयोगः॥ करे अल्, करेयल्, करे अलिं, करेयलिं, करे अलोडं, करेयलोडं॥ करे इति किम्। तगे यल्, बगेयल्॥ अलिति किम्। करेयदे॥

गडादिः ॥49॥

वृत्तिः॥ गडादिरणमाद्यन्तर्गणः। गडादिगणपठिताः शब्दाः स्वरे परे वा प्रकृत्या तिष्ठन्ति॥

प्रयोगः॥ नीनल्लदे अवनधिकनिकेयोळ् जिनपा। नीनल्लदावन-धिकनिकेयोळ् जिनपा। तांगड अंगजं गड अशोकशरं गड अंचेयुंगड। तांगडंगजं गडशोकशरं गडंचेयुंगड। चक्कने इल्लि पारिदुदु, चक्कनि-ल्लि पारिदुदु॥ गडादिरिति किम्। बेरिद्दुदु, पिरिदादुदु॥ गड, गळ, अल्तु, अल्ल, इल्ल, इल्लदे, अल्लदे, आगड, ईगड, पोक्कड, तडबड, अक्कट, अकट, अहह, बकिक्के, बकिके, भोंकने, चक्कने, भोरने, पय्कने, बय्कने, पावने, पावगे, नेट्टने, नेट्टगे, तोट्टने, तोट्टगे, आय्कने, आयगे, गिर्रने, गिर्रगे, तिर्रने, तिर्रगे, तिट्टने, तिट्टगे, सुम्मने, सुम्मगे, बिम्मने, बिम्मगे, मेल्लने, मेल्लगे, कम्मने, कम्मगे, तण्णने, तण्णगे, नुण्णने, नुण्णगे, डेक्कने, डेक्कगे, पक्कने, पक्कगे, इति गडादिराकृतिगणः॥

श्लोकार्धम् ॥50॥

वृत्तिः॥ श्लोकश्छन्दोबद्धं कन्दवृत्तादि। तस्यार्धं समभागः। स्वरान्तं श्लोकार्धं स्वरे परे वा प्रकृत्या तिष्ठति॥

प्रयोगः॥ कं॥ देवा केळ्बिं नविपें।
श्रीवीर जिनेंद्र समवसरणं बंदी॥
आवासद पित्तिलवन।
दौवरियोळ् नेलसितखिलसुरगण सहितं॥

पक्षे। समवसरण बंदी॥ यावासद॥

कं॰ ॥ कब्बिन बिल्ललर्व्व बिकय ।
तिब्बं बलिदतनु पूसरं गळ निसला ॥
उब्बेगे कोब्बिद पेण्णं ।
तब्बि दोड्दरु ब्बु निल्कुमिं तिदु सुखमे ॥
पक्षे । निसला ॥ युब्बेगे ॥ श्लोक ग्रहणं गद्यादौ मा भूदिति ॥

अनुकरणम् ॥51॥

वृत्तिः ॥ स्वरान्तमनुकरणं स्वरे परे वा प्रकृत्या तिष्ठति ॥
प्रयोगः ॥ यक्षो यादृशस्तादृशो बलि ऎंबु क्तिगे दुर्लिदघरेवलं नोंतर्प्पेरन्नोंतरे ॥ पक्षे । तादृशो बलियेंबुक्तिगे ॥ समणो अमोह वयणो ऎनिसिदगार्ग्गं । पक्षे । समणो अमोहवयणोयेनिसिदमार्ग्गं ॥ ऎन्तुमे ट्टन्तु चप्प टेयात्तु ऎंबिनं । पक्षे । ऎन्तुमे ट्टन्तु चप्प टेयात्तेंबिनं ॥ योग विभाग उत्तरार्थः ॥

अद् विकृत्या ॥52॥

वृत्तिः ॥ विकृत्या अकारान्तमनुकरणं स्वरे परे नित्यं प्रकृत्या तिष्ठति ॥
प्रयोगः ॥ दर्भैर्विना यः क्रियते स धर्म ऎं ।
दंभोज गर्ब्भं नुडिदं सुमार्ग्गमं ॥
मूलस्य नाशो बलवद्विरोध ऎं ।
दीलोक दोळ् पेळ्वरिदेनन्धमो ॥
अदिति किम् । वर्णानां ब्राह्मणो गुरु ऎंबुक्तिगे । वर्णानां ब्राह्मणो गुरु- वेंबुक्तिगे ॥ विकृत्येति किम् ।
मां रक्ष रक्ष ऎनुतेवि ।
दां रमणंगेरगिनुतिसिदं पलतेरदिं ॥
मां रक्ष रक्षेनुतेवि ।
दां रमणंगेरगिनुतिसिदं पलतेरदिं ॥
योग विभागो नित्यार्थः ॥

ह्रस्वान्न ण ल य क त टो नव्ययस्य लिङ्गान्त्यस्य द्विस्स्वराणामादेः ॥53॥

वृत्तिः ॥ स्वराणामादेः स्वराद्ध्रस्वादुत्तरेषामनव्ययस्यानां लिङ्गान्त्यानां न-ण-ल-य-क-त-टकाराणां द्विर्भावो भवति स्वरे परे ॥
प्रयोगः ॥ बेन्-अं, बेन्नं । एवं ऎन्नं, पोन्नुळ्ळं, किसुवोन्नं, चेंबोन्नुळ्ळं, पेण्णोक्कितु, मण्णदु, कण्णोळ्, अलर्ग्गण्णोळ्, निडु- गण्णालि, कल्लेल्लं, पुल्लोळ्, बिल्लिदु, कब्बुविल्लं, कुडुविल्लनोळ्, मेय्योळ्, कय्योळ्, पोय्ये, नालगय्यं, निडुमेय्यं, बेक्कडकिल्,

मुक्कोत्तितु, कळ्ळुणि, तेक्कोळ्, कित्तडि, कित्तिके, कित्तडकिल्, नड्डवि, नद्दिरुळ्॥ ह्रस्वादिति किम्। बानं, गोणं, कोलं, बायं, बाकं, आतं, ओटं॥ आदेरिति किम्। शरणर्, पवणिल्ल॥ स्वराणामिति किम्। व्यञ्जनादावपि यथा स्यात्॥ लिङ्गान्त्यस्येति किम्। वनं, पणं, जलं, नयं, सुतं, पटं॥ नणलयकतट इति किम्। अडं, पुडं, ओगं, मिगं॥ अनव्ययस्येति किम्। वलिवं, पळिवं, हो हो पक्वळिवं जगद्भयति करक्रीडा विनोदं जिनं॥

नेयुयक्षुयबयः ॥54॥

वृत्तिः॥ नेय् इत्येतदादीनां धातूनां यकारस्य द्विर्भावो भवति स्वरे परे॥

प्रयोगः॥ नेय्-अल्, नेय्यल्। एवं उय्यल्, क्षुय्यल्, बय्यल्॥ प्रतिषेधापवादोयम्॥

कम्कुमि ॥55॥

वृत्तिः॥ स्वराणामादेः स्वराद्ध्रस्वादुत्तरेषां नणळकाराणां द्विर्भावो भवति कमि कुमि च परे॥

प्रयोगः॥ कम्नणः (346), पोन्नंगल्, चिन्नंमणे, कण्णंदोकलि, कण्णंबाके। कः कुम् (347), बेळ्ळुंबट्टे, तेळ्ळुंबसुरु॥ ह्रस्वादिति किम्। मीनंबुकु, गेणंजुरिगे, सीळुंगल्लं, बीळुंदाणं॥ आदेरिति किम्। पवनंबट्टे, मुगुळुंबुगळ्॥ स्वराणामिति किम्। अन्यथा इहैव स्यात्। इन्नंमावु, ओळ्ळुंगन्नडं॥ अलिङ्गान्त्यार्थोयमारम्भः॥

वारय्गेयः ॥56॥

वृत्तिः॥ आरय्, गेय्, इत्यनयोर्धात्वोर्यकारस्य द्विर्भावो वा भवति स्वरे परे॥

प्रयोगः॥ आरय्यल्, आरयल्, आरय्ये, आरये, आरय्यिं, आरयिं, गेय्यल्, गेयल्, गेय्युत्तुं, गेयुत्तुं॥

इतः पोचि ॥57॥

वृत्तिः॥ इकारात्परस्य पकारस्य द्विर्भावो वा भवत्यच् प्रत्ययेपरे॥

प्रयोगः॥ तरिप्पं, तरिपं, बरिप्पं, बरिपं, माडिप्पं, माडिपं॥ इत इति किम्। आपं, पोपं॥ प इति किम्। मुगिवं, सुगिवं॥ अचीति किम्। माडिप्पुदु, कूडिप्पुदु। वुदुरयं भावे॥

व्याख्या॥ स्वार्थे हेतुमति वा इपुबन्तेभ्यो धातुभ्यः कर्तर्यचि, अची (447) ति भाविकाले व प्रत्यये। सोर्बेडु स्वरस्य (503) इति दोर्लोपे, लुप्तदोरि (515) ति वकारस्य पकारादेशे च सति, तदवस्थोस्य विषयो ज्ञेय इति

तादृशमेवोदाहरति तरिप्पं, तरिपमित्यादि॥ आपंपोपमिति। आपु, पोगु, इत्यनयोः कर्तर्यपि भाविनि व प्रत्यये, तागोश्च विना (502) इति वैकल्पिके वुलोपे, लुप्त दोरि (515) ति पादेशो ज्ञेयः॥ माडिपुडु, कूडिपुडु इति। अचः (455) इत्युडादेशो, स्यान्निवद्भावादच्त्वे कथमिदं प्रत्युदाहरणं स्यादित्याशंकयाह वुदुरयं भाव इति। नात्राच् परत्व- मिति भावः॥

## को दपश्च तिङि ॥58॥

वृत्तिः॥ इकारात्परस्य पकारस्य ककारस्य दप प्रत्ययस्य च द्विर्भावो वा भवति तिङ् प्रत्यये परे॥

प्रयोगः॥ माडिक्कुं, माडिकुं, माडिक्के, माडिके, माडिप्पें, माडिपें, माडिदप्पें, माडिदपें, तरिप्पयु, तरिपयु, तंदप्पयु, तंदपयु॥

## तोर्नपः ॥59॥

वृत्तिः॥ तु शब्दान्तस्य नपुंसकलिङ्गस्य सम्बन्धिनस्तकारस्य द्विर्भावो वा भवति स्वरे परे॥

प्रयोगः॥ ओक्किकत्तु, ओक्कितु, मेल्लित्तु, मेल्लितु, माडित्तु, माडितु, कूडित्तु, कूडितु॥ तो रिति किम्। करिदु, बिक्किदु॥ न प इति किम्। ओक्किदं, मेल्लिदवु॥

## न समासे ॥60॥

वृत्तिः॥ तु शब्दान्तस्य नपुंसकलिङ्गस्य सम्बन्धिनस्तकारस्य द्विर्भावो न भवति समास विषये॥

प्रयोगः॥ मेल्लडि, ओक्कान्, तेक्गदपु॥

## अक्कुक्कः ॥61॥

वृत्तिः॥ अक्, क्क्, उक्, एतेषां धातूनां ककारस्य द्विर्भावो न भवति स्वरे परे॥

प्रयोगः॥ अक् - अं, अकं। एवं अकर, ककं, क्कर, उकं, उकर॥ एतेषामिति किम्। कोक्कं, कोक्कर, ओक्कं, ओक्कर॥

## कृति ॥62॥

वृत्तिः॥ स्वरादौ कृति परे न [illegible] ल य क त टकाराणां द्विर्भावो न भवति॥

प्रयोगः॥ तिन्-इपु, तिनिपु। एवं तिनुत्तुं, उणिपु, उणुत्तुं, मेलिपु, मेलुत्तुं, कोले, पोये, गेये, बकवि, बेळपु, कल्कुटिगं, मरकुटिगं॥ कृतीति किम्। तिन्नं, उण्णं॥

## इसुपि ॥63॥

वृत्तिः॥ इसुप् प्रत्यये परे नणलयकत टकाराणां द्विर्भावो न भवति॥
प्रयोगः॥ तिनिसिदं, उणिसिदं, कोलिसिदं, बयिसिदं, उकिसिदं, नुतिसिदं, नटिसिदं, हनिसिदं, किनिसिदं, इत्यादि॥
व्याख्या॥ इसुपः कृत्यभावात् पृथग्योगः। तिनिसिदं इत्यादौ धातोर्हेतुमति (536) इति इसुप्॥ नुतिसिदं। भोगादिभ्यः (535) इति इसुप्॥ नटिसिदं। इसुप् तत्करोति (533) इत्यादिना इसुप्॥ हनिसिदं, किनिसिदं। भुञ्जादेरि (539) ति इसुप्॥

## यो वालि ॥64॥

वृत्तिः॥ अल् प्रत्यये परे यकारस्य द्विर्भावो वा न भवति॥
प्रयोगः॥ पोय् अलोडं पोयलोडं, पोय्यलोडं। एवं बयलोडं, बय्यलोडं, गेयलोडं, गेय्यलोडं॥ य इति किम्। तिनलोडं, उणलोडं॥ अलीति किम्, पोयुत्ते, गेयुत्ते॥ प्रतिषेध विकल्प विधानात्तिङलि नित्यं द्विर्भाव एव भवति। पोय्यल्बेड, बय्यल्बेड॥

## रो द्विर्व्यञ्जनस्याहादेः ॥65॥

वृत्तिः॥ रेफादुत्तरस्य हकारादि वर्जितस्य व्यञ्जनस्य द्विर्भावो भवति॥
प्रयोगः॥ कुकिर् – कोडुगुं कुकिर्क्कोडुगुं। एवं इवर्क्कडिसिदर्, उर्ग्गंक्, सुरर्ग्घनमहिमर्, जिनर्ङ्ङवनपंडितर्, बुधर्च्चदुरर्, इवर्च्छात्रर्, सुरर्ज्जयिसिदर्, अलर्झ्झषकेतनंगे, अवर्ञ्ञकारमनुच्चरिसिदर्, बुधर्ट्टीकिसिदर्, भटर्ट्ठाणदोळ्, बडगर्ड्डंबर्, नुडिवर्ढ्ढक्कर्, अवर्ण्णकारंबरेदर्, सुर्त्तन्दर्, परर्त्थट्टताराददर्, नृपर्द्दाजशूरर्, वणिजर्द्धनवंतर्, पंडितर्न्नीतिवंतर्, इवर्प्पंडितर्, अलर्फ्फलमादुदु, बंदर्ब्बट्टेगर्, सतियर्ब्भीरुगळ्, चपलेयर्म्मानिनियर्, पार्वर्य्योजकर्, विद्वांसर्ल्लाक्षणिकर्, गायकर्व्वादकर्, क्षत्रियर्श्शूरर्, नपुंसकर्ष्षंडर्, स्त्रीयर्स्साध्वुगळ्॥ र इति किम्। कक्कोंड, मेय्गलि॥ व्यञ्जनस्येति किम्। अलरिदु, अवरोळ्॥ अहादेरिति किम्। बंदर्हनुमंतर्, इवर्ळाडिदर्, कंनडिगर्ळकारमनोडंबट्टर्॥ रेफस्य व्यञ्जनान्तभाविसति यद्व्यञ्जनकार्यं प्राप्तं तत्साक्षाच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः। इवर् रमणियर्, अवर् रामलक्ष्मणर्॥

16.1.33

## लळोनन्तस्थायाश्च ॥66॥

वृत्तिः॥ अन्तस्था यरलवाः। लकारात् ळकारात्परस्यान्तस्थावर्जितस्य हकारादिवर्जितस्य च व्यञ्जनस्य द्विर्भावो भवति॥
प्रयोगः॥ कल् – कडियादुदु कल्क्कडियादुदु। एवं निल्त्तं, बल्स्साहसि

मुक्ददोंगल्, आक्कनं, कक्ग्गुडिदं॥ ल इति किम्। आन्ते, लोन्ते॥ अनन्तस्थाया इति किम्। बल्यतनं, मेल्रन्नं, बल्लंड, कल्वाके, पोगाक्यशमं, इवक्रमणि, पेक्लक्षणमं, तेकुवसुर्॥ अहादेरिति किम्। बल्हंसे, बीकककारं, मरुक्रोडगं॥ अन्तस्था-ग्रहणं यरवार्थम्। लकारस्य पूर्ववदपि सिद्धेः॥ चकारस्समुच्चयार्थः। अन्यथानन्तस्थाया अनस्यान्नत्वहादेरिति॥

स्वरादरोव्यञ्जने ॥67॥

वृत्तिः॥ स्वरादुत्तरस्य रेफवर्जितस्य व्यञ्जनस्य द्विर्भावो भवति व्यञ्जने परे॥

प्रयोगः॥ बरिसि-प्रधानरं बरिसिप्प्रधानरं। एवं कंडुक्क्षत्रियर, इदुस्स्वादु, अदुव्व्यवसायं॥ स्वरादिति किम्। क्षत्रियर्, प्रधानर्, कपयो र्माभूत्॥ अर इति किम्। इवक्कुलटयर्, अवर्स्सतियर्। रेफस्य माभूत्॥ व्यञ्जन इति किम्। प्रदानं, प्रधानं, दधयोर्माभूत्॥

मोः ॥68॥

वृत्तिः॥ मुशब्दादुत्तरस्य व्यञ्जनस्य द्विर्भावो भवति।

प्रयोगः॥ मु-कोडे मुक्कोडे। एवं मुग्गुड्डे, मुच्चवडि, मुच्चोट्टु॥ मोरिति किम्। मूलोकं, मूगावुदं॥ मुकुंदं, मुक्किसु इत्यादावर्थवद्ग्रहणेनानर्थकस्येति न भवति॥ स्वरेपि यथा स्यादित्ययमारम्भः॥

उकि ॥69॥

वृत्तिः॥ उगागमे परे पूर्वस्य व्यञ्जनस्य द्विर्भावो भवति॥

प्रयोगः॥ मनस्-उ मनस्सु। एवं वयस्सु, यशस्सु, पयस्सु, नभस्सु, रजस्सु॥

व्याख्या॥ अत्रायं विशेषः। यत्रागमान्तरमन्तरेणोङ्मात्र विधायके रुगलोपे (133) उगवादीनामि (135) त्यादि सूत्रैरुविधीयते तत्रैव द्विर्भावः। यत्वागमन्तर विधायिना अगिगुव्यंजने व्यञ्जनस्य (147) इत्यनेन विधीयते न तत्र द्विर्भाव इति॥ यदि सर्वत्र स्यात्तदा कम्कुमी (55) ति कमागमे कुमागमेच द्विर्भावो विहितस्तत्रैव लाघवात्कम्कुमुकीत्येकमेव सूत्रं क्रियेत। नोकीति योगान्तरमिति॥

लोन्तस्थायाम् ॥70॥

वृत्तिः॥ अन्तस्थायां परतो लकारस्य द्विर्भावो भवति॥

प्रयोगः॥ बल्-यतनं बल्ल्यतनं। एवं मेल्ल्रन्नं, बल्ल्लंड,

कल्ल्वाके ॥ सिद्धे सत्यारम्भो नियमार्थः । लकारस्य यदि द्विर्भावस्याद-न्तस्थायामेवेति । तेनेह न भवति । निल्तं, कल्तं ॥

कः ॥71॥

वृत्तिः ॥ अन्तस्थायां परतो ककारस्य द्विर्भावो भवति ॥
प्रयोगः ॥ ओक् - यतनं ओक्क्यतनं । एवं ओक्क्रन्नं, ओक्क्-वालनिगे ॥ अस्यापि नियमार्थत्वादिह न भवति । कक्गुडिदं । मुक्मेट्टिदं ॥ योग विभाग उत्तरार्थः ॥
व्याख्या ॥ अनन्तर योगवन्नियामक एवायं नात्र विशेष इत्याह अस्यापीत्यादि ॥ कक्गुडिदं इति । कक्कं-कुडिदं इति विग्रहः । अमकृतिज (278) इति समासः ॥ एवं मुक्मेट्टिदं इति ॥

वि वानेकस्वरस्य ॥72॥

वृत्तिः ॥ अनेक स्वरस्य शब्दस्यावयवो यो ककारस्तस्य द्विर्भावो वा भवति वकारे परे ॥
प्रयोगः ॥ ओसक् - वके ओसक्वके, ओसक्क्वके । एवं नुसुक्वागिल् नुसुक्क्वागिल् ॥ वीति किम् । नुसुक्मावणिगे ॥ अनेक स्वरस्येति किम् । मुक्क्वागिल् ॥

न लघ्वादिलघूपान्त्यादलो गदवजो वृत्तौ ॥73॥

वृत्तिः ॥ अनेकस्वरस्येत्यनुवर्तते । तच्च पञ्चम्यन्तया विपरिणम्यते । वृत्तयः कृत्तद्धितसमासाः । तद्धित समास संज्ञे च वक्ष्येते । लघ्वक्षरादेर्लघूपान्त्यादनेकस्वरादलकारान्ताच्छब्दात् परेषां गदवजकाराणां द्विर्भावो न भवति वृत्तौ विषये ॥
प्रयोगः ॥ कृति तावत् । उसिर्-दं उसिर्दं । एवं उसिर्दनं, उसिर्वं, उसिर्वनं, बिदिर्दं, बिदिर्दनं, पोगळ्दं, पोगळ्दनं, मगुळ्दं, मगुळ्दनं, अदिर्दं, अदिर्दनं, अदिर्वोडे, जगुळ्दनं, जगुळ्दं, जगुळ्दोडे, जगुळ्-वनं, जगुळ्विनं ॥ तद्धिते । उसिर्गं, बेमर्गं, नेगळ्गं, अगळ्गं, कदिर्वकं, बिदिर्वकं, मुगुळ्वोल्, नेगळ्वोल् ॥ समासे । तळिर्गेंपु, बेळर्गेंपु, मुगुळ्गाय्, ओसळ्गंदं, अलर्दोंटं, बिदिर्दट्टि, मुगुळ्-दोंगल्, ओसळ्दाणं, बेमर्वनि, पोगर्वट्टे, अमळ्वासु, ओसळ्वले, अलर्जोंपं, कदिर्जोन्नं, अमळ्जेत्रं, ओसळ्जपे ॥ लघ्वादेरिति किम् । नेसर्व्वोल्, बासुळ्व्वोल्, नेसर्द्दोणं, बासुळ्ग्गंडु ॥ लघूपान्त्यादिति किम् । पोर्मार्ग्गोंटि, पोर्मार्द्दनं, गळेगूळ्ज्जारि ओळ्नाळ्ज्जगळं ॥ अनेकस्वरादिति किम् । इद्दु, ओर्ग्गोण्, मुळ्ग्गोंडल

अगक्द्दु ॥ अल इति किम् । अरल्द्दु, अरल्द्दोंटं ॥ गदवज इति किम् । चिगुर्त्तु, बिगुर्त्तु, मुगुर्त्तु, अगर्त्ते ॥ वृत्ताविति किम् । मीनपोण गोंगोयोक्, अवक् ग्गाडिकार्त्ति, इवर्द्दक्षर, इवक्द्दाक्षायणि, बुद्धर्व्विशिष्टर्, पोगक्व्वासवनं । कुडिदज्जोंनमं, पोगक्ज्जानकियं ॥

व्याख्या ॥ ...... ॥ वृत्तिशब्दोऽजीवनाद्यनेकार्थोऽपि शब्दशास्त्रे कृत्तद्धितसमासवचनः । कृद्वृत्तिस्तद्धितवृत्तिस्समासवृत्तिरिति सकलशाब्दिकव्यवहारप्रसिद्धेरित्याह वृत्तय इत्यादि । तत्र कृदजादिरि (15) ति कृत्संज्ञाया उक्तत्वादवशिष्टद्वयमुत्तरत्र वाद्यात्तद्धितः (401) सुप्सुपा समासः (293) इति च वक्ष्यत इत्याह तद्धितेत्यादि ॥ एवमुपस्कृत्य वाक्यार्थमाह लघ्वित्यादि । ॥ तद्धिते । उसिर्गमित्यत्र उसिरित्ययं न धातुः । किंतुच्छ्वासवायुद्रव्यवाचकं नाम । ततश्च तेनजीवति गवमिगावि (415) ति गप्रत्ययः ॥ कदिर्वकमिति । कणिशवाचकात्किरणवाचकाद्वा कदिर्शब्दाद्दक्ववक्कौ (426) इति तेनाधिकृते वकप्रत्ययः ॥ समासे । तकिर्गंपु इति । तकिर-केंपुवोल् केंपु इति तकिर - केंपु इतिवा विगृह्य समासः । ओसक्गंद । गंदइति तद्भवशब्देन समासः । अन्यथा असंभवात् ॥ बिदिर्द्दद्दि इति । तद्दिशब्दः कटवाची । वेणुकट इत्यर्थः । सर्वत्र रो द्वि व्यंजनस्याहादेरि (65) ति लकौनन्तस्याद्यास्च (66) इति च प्राप्तिः ॥ प्रत्युदाहरणेषु पोरमार्गंटि इति । पोर् मारिन-गंटि इति विगृह्य रुडोर्दोरकमि (82) ति रुशब्दस्य रेफादेशे, रोद्धिरि (65) त्यादि नाद्विर्भावः । ॥ ओकनाक्ज्जगकमिति । ओकनाडु शब्दस्य दोः ककारादेशे लकौनन्तस्याद्यास्च (66) इति द्विर्भावः ॥

वा गे गक् द दप व गुमि ॥74॥

वृत्तिः ॥ इह प्रतिषेधस्याप्राप्तत्वाद्विधिरेवायं विकल्पेनसीयते । लघ्वक्षरादेर्लघूपान्त्यादनेकस्वरादलकारान्ताच्छब्दात्परेषां गे, गक्, द, दप, व, गुम्, इत्येतत्प्रत्ययनिष्ठानां ग, द, व काराणां द्विर्भावो वा भवति ॥

प्रयोगः ॥ कोनर् - गे कोनर्गे, कोनर्ग्गे । एवं आदिर्गे, आदिर्ग्गे, ओसक्गे, ओसक्ग्गे, पोगक्गे, पोगक्ग्गे, सुरगक्, सुरग्गक्, ओसक्गक्, ओसक्ग्गक्; उसिर्दर्, उसिर्द्दर्, अगुक्दय्, अगुक्द्दय्, उसिर्दपें, उसिर्द्दपें, पोगक्दपें, पोगक्द्दपें, किसुर्वय्, किसुर्व्वय्;

तेगाक्कें, तेगक्कें, ओसर्गुं, ओसर्गुं, मगुक्गुं, मगुक्ग्गुं ॥
लद्दवादेरिति किम्। ताय्निर्गे, ताय्विर्ग्गक्, कण्मलद्दय्, कण्मद्दपय्, कण्मलव्वंय्, कण्मलग्गुं, बासुक्ग्गे, बासुक्ग्गक्, पूरुक्ग्गे, पूरुक्ग्गुं ॥ लघूपान्त्यादिति किम्। पोर्मार्गे, पोर्मार्गक्, ओकसोर्गे, ओकसोर्ग्गक्, ओकसोद्दं, ओकसोद्दपं, ओकसोद्दय्, ओक्सोर्व्वं, ओकसोर्ग्गुं, नेलदाक्ग्गे, नेलदाक्ग्गक्, नेलेबाक्ग्गे, नेलेबाक्ग्गक्, नेलेबाक्द्दं, नेलेबाक्द्दपं, नेलेबाक्व्वं, नेलेबाक्ग्गुं॥
अनेकस्वरादिति किम्। मुक्ग्गे, मुक्ग्गक्, कक्ग्गे, कक्ग्गक्, कक्द्दं, कक्द्दपं, कक्व्वं, कक्ग्गुं ॥ अल इति किम्। बिसिल्ग्गे, बिसिल्ग्गक्, कवल्ग्गे, कवल्ग्गक्, कवल्द्दुदु, कवल्द्दपुदु, कवल्व्वं, कवल्ग्गुं ॥ गेगक्दद्दपवगुमीति किम्। अलग्गेरटया, पोगक्ग्गां गेयनं, पार्व्वद्दन प्रियर्, मुगुक्द्दाक्किंबद, जिनव्वंदर् ॥

कादलरः ॥75॥

वृत्तिः ॥ कादलर् इत्येतस्मादुत्तरस्य गे, गक् इत्येतत्प्रत्ययनिष्ठस्य गकारस्य द्विर्भावो वा भवति ॥
प्रयोगः ॥ कादलर्गे, कादलर्ग्गे। एवं कादलर्गक्, कादलर्ग्गक् ॥
व्याख्या ॥ अत्र कादलरिति स्त्रीपुंसादर्दिविबहुकमि (239) त्यर्प्रत्ययान्तोरमणवाचकः कादलशब्दो गृह्यते। ततश्च दपादीनामसम्भवाद्- गेगक्कोरेव सम्भव इति फलितमेवार्थमाह कादलरित्यादि।

बर्दिलादयः ॥76॥

वृत्तिः ॥ बर्दिलादिगणपठिताश्शब्दा द्विर्भावरहिता निपात्यन्ते ॥
प्रयोगः ॥ बर्दिलं, गदुर्गु, आर्दिर्मुत्ते, कर्दुकु, कर्दुंकु, बर्दुकु, बर्दुंकु, अमर्दु, अमर्दुवक्कि, ओर्दे इति बर्दिलादिराकृतिगणः ॥

मो नस्स्वरे ॥77॥

वृत्तिः ॥ मकारस्य नकारादेशो भवति स्वरे परे ॥
प्रयोगः ॥ जिनम्-ईतं, जिननितं। एवं पुजननभिवंद्यं, अक्कनीके, अम्मनिवक् ॥ स्वर इति किम्। अण्णंबंदं, अक्कंपोदक् ॥

नपि वा ॥78॥

वृत्तिः ॥ मकारस्य नकारादेशो वा भवति स्वरे परे नपुंसकलिङ्गविषये ॥
प्रयोगः ॥ नेलम्-इदु नेलनिदु। एवं पोलनिदु, नेलनोक्किन्तु, पोलनोक्किन्तु ॥ वा शब्दोऽयं व्यवस्थित विभाषार्थः। तेनेह न भवति। वृक्षमिदु, प्लक्षमिदु, नीर्दाणमेसेदुदु, काकगमोप्पितु ॥ नपीति

किम्। जनकनीतं, अक्कनिवक्॥
व्याख्या॥ . . . (77) (78) . . । विभाषा हि द्वेधा। केवल-विभाषा व्यवस्थितविभाषा चेति। यत्रैकस्मिन्नेव विषये प्रवृत्त्यप्रवृत्ति भेदाद्द्वैरूपं सा केवल विभाषा। यत्र तु क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति भिन्ने विषये सा व्यवस्थित विभाषेत्युच्यते। विविधमवस्था व्यवस्थेति॥ अत्र तु व्यवस्थितविभाषावचन इत्याह वेत्यादि॥ उदाहृत्य दर्शयति वृक्षमिदु इत्यादि॥ . .

## नश्च बिन्दुरन्यत्र॥79॥

वृत्तिः॥ मकारस्य नकारस्य च बिन्दुरादेशो भवति स्वरादन्यत्रविषये॥
प्रयोगः॥ तम् - यजमानर् तांयजमानर्। एवं नीं रसिकर्, आंलक्षणिकर्, ओसेगुंवधुगक्, तांशठं, नींषण्मुखं, आंसाधु, आवोंहरियं॥
अकृत्वाव्यञ्जन ग्रहणमन्यत्र ग्रहणं विरामेऽपि यथा स्यादिति। तेन पोदत्तां, बंदिन्नीं, कंडेवां, अदृंतां, इक्किदयुनीं, उंडेनां इत्यादि सिद्धं भवति॥

## तदन्त्यो वा वर्गे॥80॥

वृत्तिः॥ मकारस्य नकारस्य च वर्गाक्षरे परे तदन्त्यवर्णादेशो वा भवति॥
प्रयोगः॥ आम् - कुलीनर् आङ्कुलीनर्, आंकुलीनर्। एवं नीङ्गाडिकारं, नींगाडिकारं, ताञ्चलच्चित्तर्, तांचलच्चित्तर्; आञ्जगन्नुतं, आंजगन्नुतं, ताण्टक्किगर्, तांटक्किगर्, नीण्डाक्कं, नींडाक्कं, तान्तन्देगक्, तांतंदेगक्, आन्धर्मज्ञं, आंधर्मज्ञं, अक्कुम्मद्रं, अक्कुंमद्रं, आवोम्महितं, आवोंमहितं॥ वर्ग इति किम्। आंयजमानर्, नींलंचुगुलि॥ तेङ्कल्, तेंकल् इत्यादयः सानुनासिकत्वेन सबिन्दुत्वेन च घटकुम्भादि-वदखण्डा एव शब्दा इति नात्रान्वाख्यायन्ते॥

## लुबनव्ययानुकरणस्य विसर्गस्य॥81॥

वृत्तिः॥ विसर्गान्तस्याव्ययातिरिक्तानुकरणस्य वा लुब् भवति॥
प्रयोगः॥ कः केनार्थीको दरिद्रः - ओनितुमनितुमंधर्म्मजं सूरेगोडुं। कः केनार्थीको दरिद्र ओनितुमनितुमं धर्म्मजं सूरेगोडुं। वर्णानां ब्राह्मणो गुरुः - ऒंबवचनं। वर्णानां ब्राह्मणो गुरु ऒंब वचनं। यक्षो यादृशस्तादृशो बलिः - ऒंबुक्तिगे। तादृशो बलि ऒंबुक्तिगे॥ विसर्गस्येति किम्। मां रक्ष रक्ष ऒनुतोंविदां रमणं गेरगिनुतिसिदं पलतेरदिं॥ अनव्ययस्येति किम्। उः ऒंदं, चिः ऒंदं, आः ऒंदं॥ अनुकरणस्येति किम्। उः कष्टमास्तु;

चि: कष्टमायतु॥

रुडोर्दौ रकं व्यञ्जने ॥82॥

वृत्तिः॥ रु, डु, इत्येवमात्मनोर्दोर्यथाक्रमं रेफककारावादेशौ वा भवतो व्यञ्जने परे॥

प्रयोगः॥ नेसरु – बेट्टु नेसर्बेट्टु। एवं बेसरु – नुडि बेसर्नुडि, नूरु – सासिरं नूर्च्छासिरं, काडु – किच्चु काङ्किच्चु, कोडु – मोने कोङ्मोने, बीडु – ताणं बीक्ताणं॥ रुडोरिति किम्। पारिवेण्, तारिवरं, छूडिगंडु, कोडिनीर्॥ व्यञ्जन इति किम्। नेसरोळ्, काडोळ्॥ दुग्रहणमन्त्यादेश निवृत्त्यर्थं॥

बहुस्वरस्य ॥83॥

वृत्तिः॥ बहुस्वरस्य शब्दस्य रुडोर्दौ रेफककारादेशौ वा भवतो व्यञ्जने परे॥

प्रयोगः॥ बेदर्गोंटि, बेदरुगोंटि, केदर्दले, केदरुदले, मुदुक्गुंडु, मुदुडुगंडु, कवक्गोले, कवडुगोले॥ वक्ष्यमाण निषेध बाधनार्थो योगः॥

प्रत्यये ॥84॥

वृत्तिः॥ रुडोर्दौ रेफककारादेशौ नित्यं भवतो व्यञ्जनादौ प्रत्यये परे॥ योगविभागादुत्तरत्र वा ग्रहणाच्च नित्योयं विधिः॥

प्रयोगः॥ तोरु – के तोर्के। एवं तोर्कुं, माक्के, माक्कुं॥ व्यञ्जनादाविति किम्। तोरं, माडं॥

व्याख्या॥ .. (50) .. (51) ॥ तोर्कुं। तत एव धातोर-मरोर्गुमि (463) तिगुम्। उभयत्रापिवागुपोगिव (472) इत्यादिना ककारादेशः। एवं माक्के, माक्कुं, इत्यत्रापि॥

वा गि ॥85॥ 30/1/93 8.04pm

वृत्तिः॥ रुडोर्दौ रेफककारादेशौ वा भवतो गकारादौ प्रत्यये परे॥

प्रयोगः॥ तेर्गळ्, तेरुगळ्। एवं तोर्गुं, तोरुगुं; मार्गे, मारुगे, नोक्गे, नोडुगे, माक्गुं, माडुगुं, मूक्गुं, मूडुगुं, कोक्गुं, कोडुगुं॥ गीति किम्। माक्कुं, तोर्के॥

न वि मुख्ये ॥86॥

वृत्तिः॥ रुडोर्दौ रेफककारादेशौ न भवतो मुख्यवकारादौ प्रत्यये परे॥

प्रयोगः॥ तोरुवं, तोरुविनं, बीरुवन्नं, बीरुवुदु, बीरुवोडं, माडुवं, माडुविनं, माडुवन्नं, माडुवुदु, माडुवोडं॥ वीति किम्। तोर्कुं, तोर्के,

माळ्कुं, माळ्के ॥ मुख्यग्रहणं माळ्पं, तोर्प्पमित्यादावातिदेशिके मा भूदिति ॥

हस्वादेरसमासे ॥८७॥

वृत्तिः ॥ प्रत्यय इति निवृत्तम्। समासकृतं यस्य ह्रस्वादित्वं नास्ति तत्संबंधिनो ऱुडोर्दो रेफककारादेशो न भवतो व्यञ्जने परे ॥
प्रयोगः ॥ किऱु-कोल् किऱुगोल्। एवं तुऱुगाडु, कुऱुगंडु, कुडुगोल्, कडुगंपु, निडुसूल् ॥ ह्रस्वादेरिति किम्। तोर्तोर्णं, मार्गाटि, बोक्ताणं, माळ्तोऱे ॥ असमास इति किम्। पोर् मार्गाटि, पोस माळ्कट्टे ॥

आऱुमूऱोः ॥८८॥

वृत्तिः ॥ आऱु, मूऱु, इत्येतयोर्दो रेफादेशो न भवति व्यञ्जने परे ॥
प्रयोगः ॥ आऱु-गावुदं आऱुगावुदं, मूऱु-गावुदं मूऱुगावुदं ॥
व्याख्या ॥ ननु कथमत्र निर्देशः। यतो मूऱुशब्दः प्रथमं निर्देष्टव्यः। संख्याल्पा समासे इति वचनात्। अतो व्यत्यस्त करणादस्त्यत्र विशेष। मूऱुशब्दस्य दोर्निषेधः क्वाचित्क इति। मूर्म्मे, मूर्म्मडि इत्यादि प्रयोग दर्शनात्। ... ॥ आऱुगावुदं इति। आशोरि (३५५) ति वैकल्पिको ह्रस्वादेशः ॥

कतपस्तृतीय उत्तरपदादेः ॥८९॥

वृत्तिः ॥ उत्तरपदस्यादिभूतानां ककार तकार पकाराणां तृतीय-वर्णादेशो भवति ॥
प्रयोगः ॥ पळ्दु-कन्नडं पळगन्नडं। एवं गळेगूळ्, तण्गदिर्, नुण्गदपु, नुण्गऱे, कण्देऱवि, उडिदोवल्, बाय्देऱे, मेय्दोवल्, कण्बोलम्, तण्बुकिल्, नुण्बोगर्, कण्बापे ॥ कतप इति किम्। कडुचागि, कण्चल्लं, कडुटक्कु, पोसटोप्पिगे ॥ उत्तरपदादेरिति किम्। तण्गदिर्, कण्सोलं। तकारककारयोर्माभूत् ॥ आदेरिति किम्। पोससक्करे, मनेसक्कु, ककारयोर्माभूत् ॥ उत्तरपदत्वंच समास एवेति वाक्ये न भवति। कण्ण कडे, रन्नद कणि, पोन्न तगडु, अलतेगेय पडलं ॥
व्याख्या ॥ ... ॥ ननूत्तरत्र स्थितं पदमुत्तरपदं। तत्तु वाक्ये समासे वा भवति। तथा च कण्ण कडे, रन्नद कणि इत्यादावपि तस्या दित्याशंक्याह उत्तरपदत्वमित्यादि। समासे सुप्सुपा समासः (२९३) इत्यादिना यत्पदं येन समस्यते। यच्च सूक्तं पूर्वमि (२९७) ति

प्रथमं निपतति ॥

नादिष्टाद् रकः ॥90॥

वृत्तिः ॥ आदिष्टाद् रैफककारात् परेषामुत्तरपदादि भूतानां ककारतकार पकाराणां तृतीयवर्णादेशो न भवति ॥
प्रयोगः ॥ मारु – कोल् माक्कोलि । एवं बेर्त्तडे, बेप्पिट्टं, काक्किच्चु, नाक्तोले, नाक्पगरणं, ओक्कय्, इप्पानि, कीक्पोट्टे ॥ आदिष्टादिति किम् । नीर्गोडि, कुर्गोलि, कूक्गट्टे, बाक्दाणं ॥ र क इति किम् । तोम्बत्तु ॥
व्याख्या ॥ (82) ॥ ओक्कय्, इप्पानि । अत्र ओंदु, ओरडु इत्यनयोः ओरोंदोः (358), ओरडोरिरि (359) ति ओरिरित्यादेशः शिदधिकारात्सर्वस्य ॥ कीक्पोट्टे इत्यत्र केळगोः कीक् किनावि (368) ति कीकादेशः ॥ प्रत्युदाहरणे नीर्गोडि इति जल निर्गमनद्वारं । लुप्कीलमीनकीरनीरकूरस्य (148) इत्यनेन नीरशब्दस्यान्त्य लोपे नीरित्यव शिष्ट एवनादिष्टः । कुर्गोलि इति । कूरिदं – कोलि इति किरुघोपान्त्य स्वरादेर्लोपे कूरित्यव शिष्ट एव । न तु कूरशब्द-स्यादिष्टः कूर् इति । तथा सति कूक्कोलि इत्येव सिध्यति न कुर्गोलि इति । ... ॥ कूक्गट्टे इति । कूकित्योदनवाची ककारान्तो-यम खण्डोदेश्यः शब्दः ॥ न त्वोदनवाचिनः कूरशब्दस्य करंबादयः (160) इति निपातितः, कूडु शब्दस्य दोर्ककारादेशात् साधितोवेति ॥ एवं बाक्दाणं इत्यत्रापि जीवनवाची खड्गवाची वा बाकित्यखण्ड एव शब्दः । न तु मांसवाचिनः शाकवाचिनो वा बाडुशब्दस्य दोरादेशात् साधितः ॥ तोम्बत्तु इति । ओम्बत्तोस्तो-म्पत्तावि (361) ति तोमादेशः ॥

स्वराद् वः पवर्गस्य ॥91॥

वृत्तिः ॥ स्वरात्परस्योत्तरपदादिभूतस्य पवर्गस्य वकारादेशो भवति ॥
प्रयोगः ॥ अक्दु – पेरे अक्वेरे । एवं बेळ्वोलं, मूवण्णं, नडु-विरिडु, मरवणे, पकवानिनं ॥ स्वरादिति किम् । सीक्पोट्टे, काक्पोडे ॥ पवर्गस्येति किम् । पोसचावडि, पोसजनकि ॥
व्याख्या ॥ ... ॥ सीक्पोट्टे, काक्पोडे इति । व्यञ्जनाद् वानादेशा-दि (92) त्युत्तरयोग विषयः ॥

व्यञ्जनाद् वानादेशात् ॥92॥

वृत्तिः ॥ अनादेशाद् व्यञ्जनात् परस्य उत्तरपदादिभूतस्य पवर्गस्य

वकारादेशो वा भवति ॥
प्रयोग: ॥ कय्-पोय्दं कय्वोय्दं। एवं नीव्वौरदं, बेव्वैरसि, मेल्वण्णं, मेल्वातु, सूक्वातु ॥ व्यवस्थित विभाषा विज्ञानादिह न भवति। पाक्मने, बाक्मोदल्, नीर्म्मज्जिगे, बांबद्दे ॥ व्यञ्जनादिति किम्। ओकवेरे, पोसवेद्दं ॥ अनादेशादिति किम्। इबर्बाव्, इर्म्मोने ॥

## सश्चो बहुळमलय: ॥93॥

वृत्ति: ॥ लकार यकार वर्जिताद् व्यञ्जनात्परस्योत्तर पदादि भूतस्य सकारस्य चकारादेशो बहुळं भवति। बहुळ ग्रहणात्क्वचित्प्रवृत्ति: ॥
प्रयोग: ॥ इनिदु-सरं इंचरं। एवं इच्चेवडि, इच्चीवडि, इर्च्चेरंगु, ओन्चेरेगण् ॥ क्वचित्प्रवृत्ति:। कण्सोलं, मुक्सेरंगु, नल्सविगे, कीळ्सोल्लिगे ॥ क्वचिद्विभाषा। नुण्चरं, नुण्सरं, बेक्चरि, बेक्सरि, मुक्चीरे, मुक्सीरे ॥ क्वचिदन्यदेव। मुंजूरु, पोंजुरिगे, मुंजेरंगु, कण्जोडु, पोंजेके, पिंजेरंगु ॥ स इति किम्। कण्मलर्, पोंदगडु, इम्माबु ॥ अलय इति किम्। बल्सोने, केल्सरि, बाय्सवि, मेय्सवि ॥
व्याख्या ॥ - - - ॥ इंचरमिति। स्वर शब्दस्य सो व: (151) इति वकारस्य लोपात्स्वर शब्दस्य शषोर्वा स: (138) इति शकारस्य सकारादेशाद्वा सर इति तद्भव: शब्द:।

## संख्यायां छ: ॥94॥

वृत्ति: ॥ ल यकार वर्जिताद् व्यञ्जनात्परस्योत्तर पदादि भूतस्य संख्यावाचिनि वर्तमानस्य सकारस्य छकारादेशो भवति ॥
प्रयोग: ॥ ओण्दु-सासिरं ओण्छासिरं। एवं इच्छासिरं, ओन्छासिरं, नूच्छासिरं ॥ संख्यायामिति किम्। ओन्चेरंगु, इच्चेवडि ॥ अलय इति किम्। नाल्सासिरं, अय्सासिरं ॥ बहुळाधिकारादिह न भवति। ओरक्सासिरं, ओक्सासिरं, पयिंसासिरं ॥
व्याख्या ॥ ओण्छासिरं। ओण्ड नाल्कय् दोरि (351) ति डुलोप: ॥ नूच्छासिरं। रुडोरि (82) ति रेफादेश:। ओक्सासिरं। लुप्-सासिरेक्कोरि (356) ति लोप: ॥ पयिंसासिरं। पयिन्पत्तोरि (363) ति पयिनादेश: क्वचिदन्यदेवेति जकार: ॥

## णो नो ण: ॥95॥

वृत्ति: ॥ णकारात्परस्योत्तर पदादि भूतस्य नकारस्य णकारादेशो भवति ॥

प्रयोगः॥ तण्णितु—नीर् तण्णीर्। एवं तण्णेळल्, कण्णीर्, पुण्णाक्कि॥ ण इति किम्। इनिदु—नगे इन्नगे, अरल्नगे॥न इति किम्। तण्गादिर्, तण्डुकिर्॥ बहुळाधिकारादिह न भवति। गॆण्नाळ्, कण्णेय्दल्, गॊण्नाके॥

अकः प्रकृत्या ॥96॥

वृत्तिः॥ अगागमादुत्तरेषामुत्तरपदादिभूतानां वर्णानां प्रकृत्यवस्थानं भवति॥
प्रयोगः॥ ऒन्तुन्दु-कोल् ऒन्तुवकोल्। एवं पोन्तुवकोरडु, पुक्कुवकुरुळ्, तूगुव तोट्टिल्, उक्कुव तोरे, तोकगुवतळ्गे, आडुवपोलं, ऒडुवपोत्तगे, पॊण्मुवबण्णं, सोक्कुव बेलेवेण्ण्, पोय्वमके, कूगुवमारि, तूगुवसोप्र्, केगुवसोगे, कुणिवसासिरकुदुरे॥ अक इति किम्। ऒन्तुंगोल्, तूगुंदोट्टिल्, आडुंबोलं, मीनांबुक्कु॥
व्याख्या॥ समासविषये पूर्वपदस्योपान्त्यस्वरादेर्लोपे समानाधिकरणे उत्तरपदे परे 'अग्बहुळमि (345)ति वक्ष्यमाणसूत्रेणागमो विधीयते। तस्मादकः परेषां वर्णानामनेन प्रकृतिभावो विधीयते॥ ननु प्रकृतिभावो नाम स्वभावावस्थानं तच्च विधेयमेव। यत आगमप्रत्ययविकाराः खलु विधेयाः। नात्र किंचिदागम्यते, प्रतीयते, विक्रियते वा। किंवात्र विधीयत इति चेन्न॥ ...॥ तत्र ऒन्तुवकोल् इत्यादौ कतपस्तृतीय उत्तरपदादेः (89) इति तृतीयवर्णादेशस्य पॊण्मुवबण्णमित्यादौ स्वराद्वः पवर्गस्य (91) इति वकारादेशस्य तूगुवसोप्रित्यादौ सश्चौ बहुळमलयः (93) इति च त्वस्य कुणिवसासिरकुदुरे इत्यादौ संख्यायां छः (94) इति छत्वस्य प्राप्तिरिति तन्निषेधेन प्रकृतिभाव उच्यते। यद्यपि चत्व छत्वे व्यञ्जनपरस्यैव सकारस्य। तथापि बहुळविषयतया स्वरपरस्यापि भवतीति प्राप्ति सम्भावनेति॥ प्रत्युदाहरणे तु ऒन्तुंगोल्, तूगुंदोट्टिलित्यादौ कृतो मोगदबज्यनकि (344) इति सर्वत्र मकारादेश इति॥...

अविकृतेस्संख्यायाः॥97॥

वृत्तिः॥ अविकृतात्संख्यावाचिनः परेषामुत्तरपदादिभूतानां प्रकृत्यवस्थानं भवति॥
प्रयोगः॥ ऒंदुकण्णं, मूरुकय्यं, नाल्कुतलेयं, अय्दुतलेयंगे॥ अविकृतेरिति किम्। मूगय्यं, नाल्दलेयं॥ संख्याया मिति किम्। कुरुगय्यं, निडुदलेयं॥
व्याख्या॥ ऒंदुकण्णं—एकाक्षः। मूरुकय्यं—त्रिहस्तः। नाल्कुतलेयं—चतुश्शिरः। अय्दुतलेयंगे—पंचशिरसे। सर्वत्रापि समासाभिव्यक्त्यर्थं बहुव्रीहिरेवेति॥

ऒंबत्तुपत्तोर्वरो वो बः॥98॥

वृत्तिः॥ ऒंबत्तु, पत्तु इत्येताभ्यां परस्य वर्प्रत्ययस्य संबंधिनो वकारस्य बकारादेशो भवति॥

प्रयोग: ॥ ओबर्दिबर्; पर्दिंबर्, तोंबर्, पयिंबर् ॥ ओम्बत्तु पत्तोरिति किम् । मूवर्, नाल्वर् ॥ वर इति किम् । ओंबत्तुवर्ष, पत्तुबंगड ॥ व इति किम् । रेफस्य मा भूत् ॥

व्याख्या ॥ संख्याशब्दास्स्त्री पुंसविषये संख्याया वर् (251) इति वर्प्रत्ययो वक्ष्यते । तदीयस्य वकारस्येत्याह सम्बन्धिन इति ॥ ओबर्दिबर्, पर्दिबर्, ओम्बत्तु पत्तोस्तादिम् (173) इति तकारादेर्दिमादेशः । तोंबर् । ओंबत्तोस्तोंपत्तौ (361) इति तोमादेशः ॥ पयिंबर् । पयिन्पत्तोः (363) इति पयिन्नादेशः ॥ ननु ओम्बत्तु पत्तोरित्यविकृतस्यरूपोपादानात्कथं तद्विकृत्योस्तोम्, पयिन्नित्येतयोर्ग्रहणमिति चेन्न । तदादेशास्तद्वदिति स्थानिवद्भावात् तयोरपि ग्रहणात् ॥ न चैवं ओम्बय् रूपस्यापि ग्रहणं स्यादिति वाच्यम् । ओम्बयो न (100) इत्युत्तर सूत्रेण निषेधादिति । व ग्रहणं स्थानि निर्देशार्थम् । अन्यथा षष्ठ्या स्थाने ऽन्त्यस्य (22) इति रेफस्यैव स्यादित्याह व इतीति ॥

## ऍंटोः ॥99॥

वृत्तिः ॥ ऍण्टुशब्दात् परस्य वर् प्रत्ययस्य संबंधिनो बकारस्य बकारादेशो भवति ॥

प्रयोग: ॥ ऍण्बर् । योग विभागो निर्देशार्थः ॥

व्याख्या ॥ --- यतोत्र ऍण्टु ओम्बत्तु इत्येकारौकारावेकमात्रौ । तौ च नाचां मध्ये पठितावेचां ह्रस्वाभावात्तो यणादि कार्याघटनात् पृथगेव निर्दिश्यत इत्याह योग विभागो निर्देशार्थ इति ॥

## ओम्बयो न ॥100॥

वृत्तिः ॥ ओम्बय् इत्येतस्मात् परस्य वर् प्रत्ययस्य संबंधिनो वकारस्य बकारादेशो न भवति ॥

प्रयोग: ॥ ओम्बय्वर् ॥

व्याख्या ॥ इदमेव नियामकम् । ओम्बत्तु पत्तोः (98) इति पूर्वसूत्रे तदादेशानामपि ग्रहणमिति ॥ अन्यथा ओम्बयः परस्य निषेधाघटनात् । प्राप्तिपूर्वको हि प्रतिषेध इति ॥

## बेसेकोलादयः ॥101॥

वृत्तिः ॥ बेसेकोलादयश्शब्दा निपात्यन्ते ॥

प्रयोग: ॥ बेसेकोल्, तलेकट्टु, ओक्कय्, मोक्कय्, पोऱ्कय्, ओक्कोटे, पोऱ्कोटे, पोऱ्कट्टु, बरिकाल्, पोसतोले, ओक्कतोटे, पोसतोटे, कय्पारे, कत्तुरिमिगं, सोसेमुट्टु, नसुमुक्किलु, इक्कोडि, र्तिडि,

इर्प्पानि, ओक्कौल्, ओक्कय्, ओक्कणं, मुक्कण्णं, मुक्कोडे, मुक्कोडि, मुत्तके, मुक्कुप्पे इति बेसेकोलादिराकृतिगणः ॥

इति श्री भट्टाकलंकदेव विरचितायां भाषामंजरी समाख्यायां शब्दानुशासनवृत्तौ प्रथमः पादः ॥

व्याख्या ॥ बेसेकोलादिगणपठिताः शब्दा यथोपदेशं साधवो भवन्तीत्याह बेसेकोलित्यादि । निपात्यन्ते लोकप्रसिद्धिमनतिक्रम्य लक्षणनिरपेक्षमुच्चार्यन्ते । बेसेकोल्, तलेकट्टु इत्यादौ कतपस्तृतीयः (89) इत्यादि प्राप्तिर्मा भूदित्यमारम्भः ॥

इति श्री भट्टाकलंक देव विरचितायां स्वोपज्ञ शब्दशासनवृत्तेर्भाषामञ्जर्यौष्टीकायां मञ्जरीमकरन्द समाख्यायां प्रथमः पादः ॥

द्वितीय पाद प्रारम्भः ॥

स्त्र्यर्थः स्त्री ॥102॥

वृत्तिः॥ स्त्रीवाचकाश्शब्दाः स्त्रीलिङ्गा भवन्ति ॥

प्रयोगः॥ नारिकूर्तळ्, सतिनोडिदळ्, कामिनिकूडिदळ्, रंभेनर्तिसिदळ्, अच्चरसिपाडिदळ्, अवळ्बंदळ्, इवळ्पोदळ् ॥

अर्थग्रहणं पर्यायग्रहणार्थम् । स्त्रीलिंगप्रदेशाः अळ्गः स्त्रियाम् (453) इत्येवमादयः ॥

व्याख्या ॥ अत्र खलूत्तरशास्त्रे कुक्-च स्त्रियाम् (181) आतेतोतंपुंस्य द्विद्रुदोः (182) दगिमादो नपि (२६१) इत्यादिसूत्रैः स्त्रि पुन्नपुंसकलिंगोद्देशेन कुगादिकार्याणि विधीयन्ते ।...

पुमान् पुमर्थः ॥103॥

वृत्तिः॥ पुरुषवाचकाश्शब्दाः पुल्लिंगा भवन्ति ॥

प्रयोगः॥ मदननेच्चं, कामिनोदं, बिदिष्टजिसिदं, जिनंजगमनुद्धरिसिदं, पुरप्पुवळेगरेदर् ॥ पुंप्रदेशाः ॥ आतोतोतंपुंस्य द्विद्रुदोः (182) इत्येवमादयः ॥

नबन्यत् ॥104॥

वृत्तिः॥ स्त्रीपुरुषवाचकादन्यच्छब्दरूपं नपुंसकलिंगं भवति ॥

प्रयोगः॥ मल्लिगे मुगुळ्तुदु, मावु पूतुदु, पिशाचं पीडिसित्तु, भूतं पिडिदुदु ॥ नप्प्रदेशाः नप्यमिच्च बहुळम् (259) इत्येवमादयः ॥

व्याख्या ॥ ... नप्युदुः (454) इति नपुंसक लिंग एवाम उदुरादेश इति ॥

कक्त्रादयः ॥105॥

वृत्तिः॥ कळत्रादयश्शब्दा नपुंसकलिङ्गा भवन्ति॥ 13/2 7.532
प्रयोगः॥ कळत्रमोक्कित्तु, कूसुसोगयिसित्तु, ग्रहं बंदुदु॥ कळत्र, दार, ग्रह, अपत्य, तोक, शिशु, कूसु, पसवे, मगवु इति कळत्रादिराकृतिगणः॥
व्याख्या॥ ...॥ मगवु इति। मग शब्दस्य उक् सामान्ये (157) इति उगागमः॥ ..॥ तेन भूत, प्रेत, पिशाच, शाकिनी, डाकिनी, इत्यादयः मारि, मसणि, बक्कहरि, चौडि, चेके इत्यादयोऽपि शब्दा उपसंग्राह्याः॥

ऐकत्वे जनोऽकुसुदुः परः ॥106॥

वृत्तिः॥ एकत्व विशिष्टार्थे वर्तमानो जनशब्दो नपुंसकलिंगो भवति न कु, सु, दुर्य्यः परः॥
प्रयोगः॥ जनं पेळ्दुदु, स्त्रीजनमिर्द्दुदु, महाजनं मेच्चिदुदु, बहुजनमंगी-करिसित्तु॥ एकत्व इति किम्। जनं गळ् पेळ्वर्, महाजनंगळुपदेशिसिदर्॥ अकुसुदुः पर इति किम्। कुजनमिल्तं, सुजनं पेळ्दं, दुर्ज्जननज्ञं॥
व्याख्या॥ -- अनेकत्वे तु जनर्, जनरं, जनरिं इति पुंलिंगे प्रचुर प्रयोगदर्शनान्नपुंसकत्वमेवेति॥

सज्जनः कुलस्त्रियाम् ॥107॥

वृत्तिः॥ कुलस्त्रियामर्थे वर्तमानस्सज्जन शब्दो नपुंसकलिंगो भवति॥
प्रयोगः॥ इदु सज्जनं, इवु सज्जनंगळ्॥ सज्जन इति किम्। इवळ्सति, इवळ् साध्वि॥ कुलस्त्रियामिति किम्। सज्जनर्, सत्पुरुषा इत्यर्थः॥

ग्रहार्थः पुमांश्च ॥108॥

वृत्तिः॥ ग्रहास्सूर्यादयस्तद्वाचकाश्शब्दाः पुल्लिंगा नपुंसकलिंगाश्च भवन्ति॥
प्रयोगः॥ सूर्यमनुदयिसिदं, सूर्यमनुदयिसित्तु, रविमूडिदं, रविमूडित्तु, विधु बेसेदं, विधु बेसेदुदु, चंद्रं बेकेगिदं, चंद्रं बेळगित्तु, ईतं मंगळं, इदु मंगळं॥ ग्रहार्थ इति किम्। इदु पिशाचं, इदु भूतं॥ (251)

वसन्तादयः ॥109॥

वृत्तिः॥ वसन्तादयश्शब्दाः पुल्लिंगा नपुंसकलिंगाश्च भवन्ति॥
प्रयोगः॥ वसंतं बंदं, वसंतं बंदुदु। मलयानिलं तीडिदं, मलयानिलं तीडित्तु। चैत्रनोप्पिदं, चैत्रमोप्पित्तु। चैत्रनेसेदं, चैत्रमेसेदुदु॥ वसन्ता-दय इति किम्। ग्रीष्मं बंदुदु, शिशिरं पोदुदु॥ वसंत, चैत्र, मलयानिल, मंदमारुत, मधु, चैत्रानिल॥ वसन्तादयः प्रयोगगम्याः॥
व्याख्या॥ वसन्तादीनामचेतनत्वान्नपुंसकत्वैकान्ते पुंस्त्व समुच्चयार्थमय-मारम्भः॥

देवतादयो नपुंस्त्री ॥110॥

वृत्तिः॥ देवतादिगणपठिताश्शब्दा नपुंसकलिंगाः स्त्रीलिंगाश्च भवन्ति॥
प्रयोगः॥ देवते वरमनिच्चक्; देवते वरमनिच्चुदु। सरस्वति कयनेर-मागिपेकुदपक्, सरस्वति कूर्तु निंदुदातन मूखदोक्, सिरि कूर्तक्, सिरि कूर्तुदु॥ देवतादय इति किम्। देवं मेच्चिदं; शचि कूर्तक्॥
देवते, श्री, सिरि, सरस्वति, वाणि, पेण्, पेण्डति, तोकुतु इति देवतादिराकृतिगणः॥

भेद्यवद् भेदकम् ॥111॥

वृत्तिः॥ भेद्यं विशेष्यं, भेदकं विशेषणं, विशेषणवाचिनो ये शब्दास्ते विशेष्यवल्लिंगा भवन्ति॥
प्रयोगः॥ अयवर् पुरुषर्, अयवर् सतियर्, अयदु गिरिगक्, ओण्बर् पुत्रर्, ओण्बर् पुत्रियर्, ओंट पत्यंगक्, ओंदु कुपुगक्, अवर् देवर्, श्वर् देवियर्, अदु कल्पंगक्, ईतनो किकदं, ईकेयो किक्कदक्, इदो किक्कु, इनियं नल्लं, इनियक् नल्लक्, इनिदु पाल्, करियक् पार्वति, करियं कृष्णं, करिदु कत्तुरि, ईतं देवडिगं, ईके देवडि-गित्ति, केङ्कण्ण नीतं, केङ्कण्णि यिवक्॥
व्याख्या॥ भिद्यते विशिष्यते व्यावृत्यत इति भेद्यं विशेष्यम्। भेद्यति विशेषयति व्यावर्तयतीति भेदकं विशेषणम्।...

परवद् द्वन्द्वः ॥112॥

वृत्तिः॥ द्वन्द्वसमासः परवल्लिंगो भवति॥
प्रयोगः॥ इबु मरगिडुगक्, आनेकुदुरेबंटर् बंदर्, मान भावतंगियरि-दर्॥

अंशि समासः ॥113॥

वृत्तिः॥ अंशि समासः परवल्लिंगो भवति॥
प्रयोगः॥ इदु मेंगाल्, अदु मुंगय्॥
व्याख्या॥ यत्रांशांशिवाचिनोः पदयोरंशिना भिन्नेन (306) इति समासः सोंशि समास उच्यते।...

निनेन्तमलिङ्गम् ॥114॥

वृत्तिः॥ निन्, ओन्, तन् एते शब्दा अलिंगा भवन्ति॥
प्रयोगः॥ नींगक् तंदेयर्, नींगक् तायिवर्, नींगक् मरंगक्, आंतंदे, आं तायि, आं मरं, तां माडिदं; तां माडिदक्, तां माडिदु॥

ह्रस्वोनेकस्वरस्यासमासे पूर्वपदस्य ॥115॥

वृत्तिः ॥ यस्य प्रयुज्यमानस्य समासकृतमनेकस्वरत्वं नास्ति तस्यानेकस्वरस्य स्वरान्तस्य शब्दस्य ह्रस्वादेशो भवति न पूर्वपदस्य ॥
प्रयोगः ॥ नदि, लच्छि, नारि, सरस्वति, वधु, अलाबु, सरयु, कुहु, प्रियगृ ॥ अनेकस्वरस्येति किम् । श्री, ह्री, भी, धी, ई, नी, भ्रू, भू, लू, पू, गृ, कृ, रै, गौ, नौ, ग्लौ ॥ असमास इति किम् । महाश्री, पुण्यश्री, सुभ्रू, प्रियगृ, अतिह्री, सुरै, सुद्यो, शरद्ग्लौ ॥ महालच्छि, महानदि, इत्यादौ तु स्वत एव अनेकस्वरत्वाद्ध्रस्वादेशः ॥ अपूर्व पदस्येति किम् । नदीपति, गंगाजलं, वधूवरं ॥

करुणादीनाम् ॥116॥

वृत्तिः ॥ करुणादि गणपठितानां शब्दानां ह्रस्वादेशो भवति न पूर्वपदभूतानाम् ॥
प्रयोगः ॥ करुणं, उपत्यकं, अधित्यकं ॥ अपूर्वपदभूतानामिति किम् । करुणाशरधि, दंष्ट्रामूलं ॥ करुणा, खट्वा, उपत्यका, अधित्यका, दंष्ट्रा, वालुका, कन्धरा, मोचा इति करुणादिराकृतिगणः ॥
व्याख्या ॥ यद्यप्येषां पूर्वेणैव ह्रस्वादेशः सिध्यति तथापि ओदातः स्त्रियाम् (118) इति वक्ष्यमाणार्धैकारादेश बाधनार्थोयमारम्भः ॥ आकृतिगणोयम् । तेन मन्दुरा, घृणा, पद्मा, पाटला, इत्यादीनां यथालक्ष्यमुपसंग्रह इति ॥

रम्भायाः कदल्याम् ॥117॥

वृत्तिः ॥ कदल्यर्थे वर्तमानस्य रम्भाशब्दस्य ह्रस्वादेशो भवति नपूर्वपदस्य ॥
प्रयोगः ॥ रंभं, रंभंगक ॥ कदल्यामिति किम् । रंभं केकिकुं पेक्खामं ॥ अपूर्वपदस्येति किम् । रंभास्तंभंगक ॥

ओदातस् स्त्रियाम् ॥118॥

वृत्तिः ॥ असमासेनेकस्वरस्य स्त्रीलिंगे वर्तमानस्य आकारान्तस्य शब्दस्यार्धैकारादेशो भवति न पूर्वपदस्य ॥
प्रयोगः ॥ माले, बाले, शाले, शय्ये, कांते, वनिते ॥ अनेकस्वरस्येति किम् । ज्या, मा, प्ता, सा ॥ असमास इति किम् । महाज्या, परमा, पिशंगाक्षा, परमसा ॥ आत इति किम् । नदि, वधु ॥ स्त्रियामिति किम् । क्षीरपं, सोमपं ॥ अपूर्वपदस्येति किम् । बालास्तनंगक, कांताकटाक्षंगक ॥

पात्रस्य भाण्डे वा ॥119॥

वृत्तिः ॥ भाण्डार्थे वर्तमानस्य पात्रशब्दस्यार्धैकारादेशो वा भवति नपूर्वपदस्य ॥ पक्षे यथायोगं भवति ॥

प्रयोगः॥ पात्ते, पात्तेगव्, पात्तं, पात्तंगव् ॥ भाण्ड इति किम्। पात्तं योग्यो नर्तकी वा ॥ पात्रस्येति किम्। भाजनं ॥
व्याख्या ॥ भाण्डमुपकरणं। तद्वाचिन एवेति यद्यपि छत्रार्थः तथापि क्वचिदन्यत्रापि दृश्यते।... तदुपसंग्रहाय वा शब्दो बहुकार्यकोङ्गीकार्यः॥

ऊष्मादीनाम् ॥१२०॥

वृत्तिः॥ ऊष्मादिगणपठितानां शब्दानामर्धौकारादेशो वा भवति नपूर्वपदभूतानां॥ पक्षे यथायोगं भवति॥
प्रयोगः॥ ऊष्मौ, ऊष्मं, ग्रीवे, ग्रीवं, दर्मौ, दर्मं, माते, मातरं, मातृ॥ ऊष्मन्, दर्भ, अक्षत, हंस, शाण, फलक, घटिक, काक, घूक, प्रहरण, जीरक, अन्दुक, कलम, ऊढ, प्रश्न, उदाहरण, कोण, वध, अभिलाष, कन्दरा, ग्रीवा, भिक्षा, अन्वीक्षा, कुंभ, आख्या, आज्ञा, नासिका, उत्कण्ठा, उत्कलिका, वन्या, मातृ, अमुत्र, परत्र, उभयत्र, सर्वत्र इत्यूष्मादिराकृतिगणः॥

उद् रूपस्य ॥१२१॥

वृत्तिः॥ रूप शब्दस्य उकारादेशो वा भवति न पूर्वपदस्य॥
प्रयोगः॥ रूपु, रूपुगव्, रूपं, रूपंगव्॥

ऋतोरः ॥१२२॥

वृत्तिः॥ ऋकारान्तस्य शब्दस्य अर इत्यादेशो वा भवति न पूर्वपदस्य॥
प्रयोगः॥ पितरं, पितृ, मातरं, मातृ, भ्रातरं, भ्रातृ, जामातरं, जामातृ॥
ऋत इति किम्। प्रियगृ॥

ऋदारौ तुः ॥१२३॥

वृत्तिः॥ वेति निवृत्तम्। तृ प्रत्ययान्तस्य शब्दस्य ऋकार आरश्चादेशौ भवतो न पूर्वपदस्य॥
प्रयोगः॥ भर्तृ, भर्तारं, हर्तृ, हर्तारं, स्मर्तृ, स्मर्तारं, धर्तृ, धर्तारं॥ तुरिति किम्। पितरं, पितृ, मातरं, मातृ॥ ऋतः ऋद् विधानमरादेश बाधनार्थम्॥

स्वस्रादेः ॥१२४॥

वृत्तिः॥ स्वस्रादिगणपठितानां शब्दानां ऋकार आरश्चादेशौ भवतो न पूर्वपदभूतानाम्॥
प्रयोगः॥ स्वसृ, स्वसारं, नप्तृ, नप्तारं, नेष्टृ, नेष्टारं, त्वष्टृ, त्वष्टारं॥ स्वस्रादेरिति किम्। मातरं, भ्रातरं॥ स्वसृ, नप्तृ, नेष्टृ,

त्वष्टृ, क्षतृ, होतृ, पोतृ, प्रशास्तृ इति स्वस्रादिः॥ स्वस्रादौ नप्त्रादीनां ग्रहणं संज्ञाशब्दानां व्युत्पत्ति पक्षे नियमार्थमव्युत्पत्ति पक्षे विध्यर्थम्॥

दातुरश्च ॥125॥

वृत्तिः॥ दातृ शब्दस्य अकार, ऋकार, आरश्चादेशा भवन्ति नपूर्वपदस्य॥
प्रयोगः॥ दातं, दातृ, दातारं॥

मान्धातम् ॥126॥

वृत्तिः॥ मान्धातृ शब्दो मान्धात इत्यदन्ततया निपात्यते नपूर्वपदभूतः॥
प्रयोगः॥ चागदोक्तीतं मान्धातं॥ पूर्वपदे तु न भवति। मांधातृचक्रेश्वरम्॥
व्याख्या॥ - - लोक प्रसिद्ध शब्द स्वरूपोच्चारणं निपात इति॥

वेधसि ऋदरौ विधातुः॥127॥

वृत्तिः॥ वेधस्यर्थे वर्तमानस्य विधातृशब्दस्य ऋकारोरशब्दश्चादेशौ भवतो न पूर्वपदस्य॥
प्रयोगः॥ विधातृ, विधात्रं॥ वेधसीति किम्। विधातृ, विधातारं, विधायक इत्यर्थः॥ विधातुरिति किम्। धातृ, धातारं॥ ऋदग्रहणमरादेश बाधनार्थम्॥

सख्युरदायौ ॥128॥

वृत्तिः॥ सखि शब्दस्य अकार आयश्चादेशौ भवतो न पूर्वपदस्य॥
प्रयोगः॥ सखं, सखायं॥ सख्युरिति सखी शब्दस्य मा भूत्॥

व्यञ्जनस्यानब्जसन्तवल्लुप्-च तस्य ॥129॥

वृत्तिः॥ व्यञ्जनान्तस्य शब्दस्या नपुंसक लिंगे जसन्तस्येव रूपमतिदिश्यते। तस्य च लोपो भवति न पूर्व पदस्य॥ 20/2 8057
प्रयोगः॥ सुवाच् - सुवाचं। एवं गुणभाजं, अश्वयुजं, ऋत्विजं, देवेजं, मरुतं, भगवंतं, महांतं, अग्निमथं, सूत्रग्रंथं, द्विपादं, चतुष्पादं, वीरुधं, तत्वबुधं, ककुभं, प्रदामं, प्रियचत्वारं, दिवं, विशं, तादृशं, त्विषं, रत्नमुषं, गोदुहं, मधुलिहं, अनड्वाहं, प्रष्ठवाहं॥ व्यञ्जनस्येति किम्। घटं, पटं॥ अनबग्रहणं गुणभाजादीनां गुणभांजादिकं माभूदिति। तस्यग्रहणं व्यंजनान्तस्यैव लोपनिवृत्यर्थम्॥ अपूर्व पदकृत्यं पूर्ववत्॥

नोऽश्वपथिमथः॥ 130॥

वृत्तिः॥ लुबिति वर्तते। श्वन्, पथिन्, मथिन् वर्जितस्य नकारान्तस्य शब्दस्य लुब् भवति न पूर्वपदस्य॥
प्रयोग:॥ राजन् - राजं। एवं मूर्द्धं, पूषं, अर्यमं, करि, दंडि, हस्ति,

व्रांत॥ न इति किम्। गरुत्मंतं, गुणवंतं॥ अश्वपथिमथ इति किम्। श्वानं, पंथानं, मंथानं॥

ऋभुक्ष युवा ध्व मघव जगतो वा ॥131॥

वृत्तिः॥ ऋभुक्षादिशब्दानां लोपो वा भवति न पूर्वपदभूतानाम्॥
प्रयोगः॥ ऋभुक्षन्, ऋभुक्षं, ऋभुक्षाणं। एवं युवं, युवानं, अध्वं, अध्वानं, मघवं, मघवानं, जगं, जगत्तु। जगच्छब्दस्याबादित्वात् पक्षे उगागमः॥
व्याख्या॥ उगबादीनाम् (135) इति वक्ष्यमाण सूत्रेणोगागमे उकि (69) इति द्वित्वमिति॥

सोऽवसः ॥132॥

वृत्तिः॥ वस् प्रत्यय रहितस्य सकारान्तस्य शब्दस्य लोपो वा भवति न पूर्वपदस्य॥
प्रयोगः॥ मनस्, मनं। एवं पयं, यशं, शिरं, धनु, सर्पि, चंद्रमं, पुरूरवं, रजं, अंगिरं, उशनं॥ स इति किम्। अश्वयुजं, गुणभाजं॥ अवस इति किम्। विद्वांसं, पेचिवांसं॥

उगलोपे ॥133॥

वृत्तिः॥ वस्प्रत्ययरहितस्य सकारान्तस्य शब्दस्य लोपाभावपक्षे उगागमो भवति न पूर्वपदस्य॥
प्रयोगः॥ मनस्सु, पयस्सु, यशस्सु, शिरस्सु, धनुस्सु, सर्पिस्सु, चंद्रमस्सु, पुरूरवस्सु, अंगिरस्सु, उशनस्सु॥ अलोपग्रहणमुग्लुपो-विषयविभागार्थम्॥

येयसः ॥134॥

वृत्तिः॥ ईयस् प्रत्ययान्तस्य शब्दस्य लोपाभावपक्षे उगागमो वा भवति न पूर्वपदस्य॥
प्रयोगः॥ श्रेयसन्, श्रेयं, श्रेयस्सु, श्रेयांसं। एवं ज्यायं, ज्यायस्सु, ज्यायांसं, कनीयं, कनीयस्सु, कनीयांसं, लघीयं, लघीयस्सु, लघीयांसं॥ ईयस इति किम्। मनं, मनस्सु॥

उगबादीनाम् ॥135॥

वृत्तिः॥ अबादीनां शब्दानामुगागमो भवति न पूर्वपदभूतानाम्॥
प्रयोगः॥ अप्, अप्पु। एवं वियत्तु, संयत्तु, जगत्तु॥ पुनरुग्ग्रहणं नित्यार्थम्॥ अप्, वियत्, संयत्, विद्युत्, जगत्, द्युत्, परीक्षित्, अग्निचित्, यजुस्, सदस्, तटित् इत्यबादिराकृतिगणः॥

वागादीनां स्वन्तवच्च ॥136॥

वृत्तिः॥ वाच् इत्येवमादीनां शब्दानां स्वन्तवत् प्रथमैकवचनवद् रूपमतिदिश्यते उगागमश्च भवति। न पूर्वपदभूतानाम्॥
प्रयोगः॥ वाच् वाक्कु। एवं दिक्कु, त्वक्कु, ऋटक्कु, उष्णिक्कु, क्षुत्तु, प्रतिपत्तु, परिषत्तु॥ वाच्, त्वच्, ऋच्, क्षुध्, वीरुध्, समिध्, संपद्, प्रतिपद्, परिषद्, विपद्, उष्णिह्, स्रुच्, त्वज्, द्विष्, दिश्, विश् इतिवागादिराकृतिगणः॥

महदादीनां नपि ॥137॥

वृत्तिः॥ महदादीनां शब्दानां स्वन्तवद् रूपमतिदिश्यते उगागमश्च भवति नपुंसकलिंगविषये। न पूर्वपदभूतानाम्॥
प्रयोगः॥ महत् महन्तु। एवं बृहन्तु, प्राक्कु, अवाक्कु, सम्यक्कु॥ नपीति किम्। महांतं, प्रांचं, प्रत्यंचं॥ महत्, बृहत्, प्राच्, अवाच्, प्रत्यच्, उदच्, तिर्यच्, विष्वच्, न्यच्, अमुद्र्यच्, अदद्र्यच्, अमुमुयच्, अदमुयच्, सध्र्यच्, सम्यच् इति महदादिराकृतिगणः॥

शषोर्वा सः ॥138॥

वृत्तिः॥ निवृत्तमपूर्वपदस्येति॥ शकारषकारयोस्सकारादेशो वा भवति॥
प्रयोगः॥ शशि ससि, शिशु सिसु, शंके संके, शंबर संबर, संशय संसय, वेष वेस, दोष दोस, रोष रोस, दूषण दूसण, अनिमिष-अनिमिस, कषाय कसाय॥

लो ळः ॥139॥

वृत्तिः॥ लकारस्य ळकारादेशो वा भवति॥
प्रयोगः॥ जल जळ, तिलक तिळक, फल फळ, कुल कुळ, अलि अळि, सलिल सळिळ॥

डो बहुळम् ॥140॥

वृत्तिः॥ डकारस्य ळकारादेशो बहुळं यथालक्ष्यं भवति॥
प्रयोगः॥ गुड गुळ, विडंग विळंग, गौडी गौळि, नाडी नाळि, खड्ग खळ्ग, षाड्गुण्य षाळ्गुण्य॥ बहुळग्रहणादिह न भवति। कांडपट, मुंडन, मुंडित, मंडन, मंडित, कडार, गडुल॥
व्याख्या॥ - - - ॥ तत्र कुळच्च स्त्रियाम् (131), अड्डाणाच: (132) इत्यादि सूत्रैर्यत्र ळकार आगम रूपेण विधीयते स आगतः। यथा

ओर्व्वक्, मेल्लेदैयक्, पेरेवणेयक्, अल्लिदक्, इल्लिदक्, मूडणक्, पडुवणक्, बंदक्, पोदक्, इवक्, अवक्, करियक्, बिकियक् इत्यादि।
यत्रतु गकनेकत्वे सुपि (232), वकवक्कौ (420), कुकिस्तान्स्त्रील्ये (545) इत्यादि सूत्रैः प्रत्ययरूपेण विधीयते स प्रतीतः। यथा घट्टगक्, पट्टगक्, नेलगक्, पोलगक्, मडिवकं, पडेवकं, डाडपवकं, तेज़ेवकं, अंजुकुकि, ओडुकुकि, ज़ुदाकि, माताकि, ओंचंगुकि, आटंगुकि इत्यादि।। यद्यप्यत्र ककारमात्रस्य न प्रत्ययतया विधिस्त-थापि प्रत्ययावयवत्वात् प्रत्ययव्यपदेश इति।। यत्र पुनः लोकः (139), डो बहुलं (140) इत्यादि सूत्रैरादेशरूपेण विधीयते स आदिष्टः। स च द्वेधा। लक्षणसिद्धो निपातसिद्धश्चेति। तत्राद्यस्तूक्त सूत्रैरेव लक्षितः। द्वितीयस्तु करंबादि (160) सूत्रेण निपातितः। यथा नाकि, गाकि, विकंगं, पक्कुकु, दाकिंबं, कुंबकं, पकिहत्तं, गेक्कु इत्यादि। एवं त्रिविधेषु विहित विकल्पेषु यस्त्वागतः प्रतीतोवा ककारः।

यो जः ॥141॥

वृत्तिः ॥ बहुलमिति वर्तते। यकारस्य जकारादेशो बहुलं भवति॥
प्रयोगः॥ याग-जाग, योगि-जोगि, युद्द-जुद्द, यावक-जावक, दुर्योधन - दुर्जोधन, यवे-जवे॥

द्वितीयस्य प्रथमो वर्गाणाम् ॥142॥

वृत्तिः॥ वर्गाणां द्वितीयस्य वर्णस्य प्रथमवर्णादेशो बहुलं भवति॥
प्रयोगः॥ खदिर-कादिर, खल-कल, खण्ड-कंड, खास-कास, नख-नक, छन्द-चंद, छिन्न-चिंन, छवि-चवि, छान्दस-चांदस, छन्न-छंन, कण्ठिके- कंटिके, शुण्ठि- सुंटि, मठ-मट, कुण्ठ-कुंट, कण्ठ-कंट, कथे-कते, कन्थे-कंते, पन्था-पंत, मिथिले- मितिले, पथ-पत, फल-पल, फाल-पाल, फणि-पणि, कफ-कप, गुम्फन-गुंपन॥ वर्गग्रहणं पाठापेक्षया मा भूदिति॥

तृतीयः प्रथमचतुर्थयोः ॥143॥

वृत्तिः॥ वर्गाणां प्रथमानां चतुर्थानांच तृतीयवर्णादेशो बहुलं भवति॥
प्रयोगः॥ वासुकि-वासुगि, डमरुकं-डमरुगं, आकर-आगर, मल्लिके-मल्लिगे, जीरिके-जीरिगे, सूचि-सूजि, मोचन-मोजन, वचे-वजे, वाचने-बाजने, संचय-संजय, कोटे-गोडे, मकुट-मगुड, अटवि-अडवि, माट-माड, तट-दड, जाति-जादि, वसति-बसदि, चतुर-चदुर, दूति-दूदि, कैतव-कैदव॥ चतुर्थस्य। घंटे-गंटे।

घटे-गहे, ओघ-ओग, माघ-माग, संघ-संग, झंके-जंगे, झकट-जगक, झंपे-जंपे, झडिति-जडिति, झष-जस, ढक्के-डक्के, गाढ-गाड, रूढि-रूडि, षण्ढ-सँड, दृढ-दिड, धन-दन, धर्म-दम्म, धरे-दरे, निधि-निदि, साधक-सादक, भैरव-बैरव, भोगि-बोगि, भय-बय, शम्भु-संबु, शोभे-सोबे ॥

बभोर्वः ॥144॥

वृत्तिः॥ बकारभकारयोर्वकारादेशो बहुळं भवति॥
प्रयोगः॥ कबळ-कवळ, शिबिके-सिविके, शम्ब-संव, बंधन-वंदन, विबाध-विवाद, काम-काव, भीम-बीव, ग्राम-गाव, याम-जाव, कुङ्कुम-कुंकुव॥

पो ह्श्च ॥145॥

वृत्तिः॥ पकारस्य हकारादेशश्चकाराद्वकारादेशश्च बहुळं भवति॥
प्रयोगः॥ गोपुर-गोहुर, परवश-हरवस, पट्टिके-हट्टिगे, पीवर-हीवर, कपि-कवि, दीपिके-दीविगे, चापल-जावळ, धूप-धूव, कूप-कूव॥

वो बः ॥146॥

वृत्तिः॥ वकारस्य बकारादेशो बहुळं भवति॥
प्रयोगः॥ वसे-बसे, वेग-बेग, वञ्चने-बंचने, वसन्त-बसंत, वीणे-बीणे॥

अगिगुग् व्यञ्जने व्यञ्जनस्य ॥147॥

वृत्तिः॥ व्यञ्जनेपरे व्यञ्जनस्य अगागम इगागम उगागमश्च बहुळं भवति॥
प्रयोगः॥ यत्न-यतन, इन्द्र-इंदर, प्रश्न-परसन, व्रत-वरत, श्रम-सरम, वर्ष-वरिस, चन्द्र-चंदिर, मन्द्र-मंदिर, श्री-सिरि, ह्री-हिरि, मुक्ति-मुकुति, युक्ति-युकुति, अल्प-अलुप, युग्म-जुगुम, अर्ह-अरुह॥

लुप् कीलमीनकीरनीरकूरस्य ॥148॥

वृत्तिः॥ कीलादिशब्दानां लोपो बहुळं भवति॥
प्रयोगः॥ कील-कील्, मीन-मीन्, कीर-कीर्, नीर-नीर्, कूर-कूर्॥
व्याख्या॥ कूलस्यापि दृश्यते। कूल्, कूल्गे, कूलोक् इत्यादि॥

सस्थि ॥149॥

वृत्तिः॥ सकारस्य बहुलं लुब् भवति थकारे परे॥
प्रयोगः॥ संस्थे - संते, स्थान - ताण, स्थिति - तिति, स्थण्डिल - तंडिल, अवस्थे - अवते॥

स्पर्शादिषु ॥150॥

वृत्तिः॥ स्पर्शादिगण पठितशब्देषु वर्तमानस्य सकारस्य बहुलं लुब् भवति॥
प्रयोगः॥ स्पर्श - परुस, स्फटिक - पटिक, स्फिक्के - फिक्के, स्तुति - थुति॥ स्पर्श, स्फटिक, स्फोटक, स्फिक्का, स्फालक, स्पन्दन, स्कन्द, स्कन्दन, स्तम्भ, स्तम्भन, स्तोभ, स्तोभन, स्तुति, स्तवन, स्तिमित, स्तोम, स्तव, स्फुरण, स्मरण, स्फार इति स्पर्शादिराकृतिगणः॥

सो वः ॥151॥

वृत्तिः॥ सकारात्परस्य वकारस्य बहुलं लुब् भवति॥
प्रयोगः॥ स्वर्ग - सग्ग, स्वामि - सामि, स्वयम्भु - सयंबु, स्वभू - सबु, स्वर - सर, तपस्वि - तपसि, श्वान - सान, श्वेत - सेत, शाश्वत - सासत, ईश्वर - ईसर, परिष्वङ्ग - परिसंग, अभिष्वङ्ग - अबिसंग॥,

धो विन्ध्य वन्ध्या सन्ध्या ध्याने ॥152॥

वृत्तिः॥ विन्ध्यादिशब्दे वर्तमानस्य धकारस्य बहुलं लुब् भवति॥
प्रयोगः॥ विन्ध्य - बिंज, वन्ध्या - बंजे, सन्ध्या - संजे, ध्यान - जान॥

रो व्यञ्जने ॥153॥

वृत्तिः॥ रेफस्य बहुलं लुब् भवति व्यञ्जने परे॥
प्रयोगः॥ वर्ग - वग्ग, दुर्ग - दुग्ग, वर्ति - बत्ति, कर्तरि - कत्तरि, मर्कट - मक्कड॥ व्यञ्जन इति किम्। राशि, रत्नं॥

पूर्वश्च व्यञ्जनात् ॥154॥

वृत्तिः॥ व्यञ्जनादुत्तरस्य रेफस्य लोपः पूर्ववर्णादेशश्च बहुलं भवति॥
प्रयोगः॥ द्रोणि - दोणि, श्रेणि - सेणि, श्रोणि - सोणि, चन्द्र - चंद, प्रभु - हबु, प्रसर - पसर, मुद्रिके - मुद्दिगे, निद्रे - निद्दे, पत्रिके - हत्तिगे, वेत्र - बेत्त, वप्र - बप्प॥

षः कः ॥155॥

वृत्तिः॥ ककारादुत्तरस्य षकारस्य लोपः पूर्ववर्णादेशश्च बहुलं भवति॥
प्रयोगः॥ क्षार - कार, क्षीर - कीर, भैक्ष - बैक, दीक्षे - दीके, क्षेपण - केपण,

रक्षो – रक्के, अक्षर – अक्कर, मिक्षे – बिक्के, लक्षण – लक्कण, पक्ष-पक्क॥

## ह्रस्वस्स्वराणामादेः ॥156॥

वृत्तिः॥ स्वराणां मध्ये आदिभूतस्य स्वरस्य ह्रस्वादेशो बहुळं भवति॥
प्रयोगः॥ साक्षि – सक्कि, प्रेक्षण – पेक्कण, काञ्चि – कंचि, राक्षस – रक्कस, काण्डपट – कंडपट, कार्य – कज्ज, आर्य – अज्ज॥

## ओदुतः ॥157॥

वृत्तिः॥ स्वराणामादिभूतस्य उकारस्याधौकारादेशो बहुळं भवति॥
प्रयोगः॥ कुण्ड – कोंड, कुन्त – कोंत, तुवरि – तोवरि, भुजङ्ग – बोजंग, सुख – सोग, सुभग – सोबग॥

## इदृतः॥ 158॥

वृत्तिः॥ स्वराणामादिभूतस्य ऋकारस्य इकारादेशो बहुळं भवति॥
प्रयोगः॥ तृण – तिण, दृढ – दिढ, भृङ्ग – बिंग, शृङ्ग – सिंग, कृष्ण – किष्ण, मृग – मिग॥

## रिरनुत्तरस्य ॥159॥

वृत्तिः॥ कुतश्चिद् वर्णादनुत्तरस्य ऋकारस्य रिशब्दादेशो बहुळं भवति॥
प्रयोगः॥ ऋषि – रिसि, ऋण – रिण, ऋतु – रितु, ऋद्धि – रिद्धि, ऋषभ – रिषभ॥ अनुत्तरस्येति किम्। शृंगार – सिंगार, भृंगार – बिंगार॥

## करम्बादयः ॥160॥

वृत्तिः॥ करम्ब इत्यादयश्शब्दाः कदम्बादीनां शब्दानां बहुळं निपात्यन्ते॥
प्रयोगः॥ कदम्ब – करम्ब। अत्र दकारस्य रेफो निपात्यते॥ अप्सरस् – अच्चरसे। अत्र पकार सकारयोश्च कारादेशः अन्त्यसकारस्याधैकारागमश्च निपात्यते॥ गहन – गान। अत्र प्रथमाकारस्य दीर्घादेशो हशब्दस्य लोपश्च निपात्यते॥ प्रग्रह – हग्ग, तुलसि – तोळचि, कांस्य – कंचु, नर्तकि – नच्चणि, वत्सला – बच्चळे, नित्य – निच्चं, कुहक – कुयक, सिंह – सिंग, संनाह – संनण, शुक्ति – पुत्ति, युक्ति – जुत्ति, विस्तार – बित्तर, कस्तूरि – कत्तुरि, पुस्तक – होत्तगे, कुस्तुंबुरु – कोत्तुंबरि, गुप्त – गुत्त, चिह्न – चिन्न, पुष्करिणि – होक्करिणि, मस्करि – मक्करि, शष्कुलि – चक्कुलि, उत्पट – उत्तडे, उत्पाट – उब्बटे, रत्न – रन्न, कर्णाटक – कन्नड, उन्मत्त – उम्मत्त, उज्ज्वल – उज्जळ, प्रज्वल – पज्जळ, बिल्वपत्र – बेल्लवत्त, सत्वक – सत्तुग, अन्याय – अन्नेय, कन्यका – कन्निके, पल्ययन – (पल्याण) पल्लण, मृत्यु – मित्तु, मिक्कु इति च। काव्य – कब्ब, लेप्य – लेप्प, अग्नि – अग्गि, लाग्निक – लग्गिग, पादुका – हावुगे,

गदा - गजे, दन्त - जंत, मदन - मयण, पद - पय, यशोदा - जसोये, अमरि - अमरे, दंष्ट्रा - दाडे, काहळ - काळे, हृष्ट - हेट्ट, हृदय - हिदय, ओदें इति च। शृंखला - संकले, कृतक - गतक, प्राकृत - पागद, संस्कृत - सक्कद, प्राकार - पागार, पाकल् इति च। अमृत - अमर्दु, मृद्विका - मिद्दिगे, अङ्गुष्ठ - उंगुट, त्वरित - तुरिद, विज्ञापन - बिन्नह, सँज्ञा - सन्ने, शून्य - सोन्ने, यज्ञ - जन्न, ज्योत्स्ना - जोन्न, आज्ञा - आणे, कुक्कुट - कोळि, कुमार - कोर, कुवर इति - च। मयूर - मोर, कुरण्ट - गोरंटे, मूढ - मोढ, कूट - कोडु, सौराष्ट्र - सोरट्ट, सौभाग्य - सोबग्गु, क्रौञ्च - कोंचे, कौपीन - कोवण, व्याघ्र - बग्ग, तात - तंदे, तीक्ष्ण - तिक्क, विनायक - बेनक, चेल - सेले, शीला - सीले, शिला सिले, नियम - नेम, जटा - जडे, शय्या - सेज्जे, व्यञ्जन - बेंजन, व्यतिरेक - बेतिरेक, व्यथा - बेते, व्यवहार - बेहार, सैन्धव - सेंदव, वैद्य - बेज्ज, वैशाख - बेसगे, वैर - बैर, हिंगु - इंगु, सिन्दूर - सेंदुर, दिवस - देवस, दिशा - देसे, दुकूल - दुगुल, आकाश - आगस, शलाका - सलगे, ताम्बूल - तंबुल, आराम - आरवे, विलास - बिळस, बन्धूक - बंदुगे, गोधूम - गोदुवे, बर्बूर - बोब्बुलि, कर्पास - कुप्पस, श्मशान - मसण, प्रयाण - पयण, अशोक - असुगे, कठोर - कट्टुर, उद्योग - उज्जुग, उद्यापन - उज्जवणे, आयुष्य - आयिस, ज्योतिष - जोयिस, मानुष - मानिस, आलेख - अक्के, रसायन - रसयण, साहस - सास, सहज - साज, वाहळि - वाळि, महिमन् - महिमे (मैमे), बाह्याळि - बैहाळि, यमुना - जगुने, जलूका - जिगुळे, शिबिर - सीवर, अध्यक्ष - अद्दिक, उत्कट - उग्गड, अगस्त्य - अगसे, सङ्घात - संगड, खनि - कनि, स्थान - ताण, पिशुन - हिसुण, विज्ञान - बिन्नण, नर्तन - नच्चण, शुनक - सोणग, कुसुम्भ - कुसुंबे, धूम - दूवे, कम्बल - कंबळि, पाटला - पादरि, अर्गल - अगुळि, कुद्दाल - गुद्दलि, काच - गाजु, अक्ष - अच्चु, अक्षि - अच्चि, लक्ष्मी - लच्चि, दामन् - दावु, चूत - जूंटु, पिष्ट - हिट्टु (पिट्टु), आश्चर्य - अच्चरि, कपिञ्जल - कविंजु, ग्रहण - गरण, ग्रामीण - गाविल, द्वीप - दीवि, द्वारपट्ट - दारपट्ट, ध्वनि - दनि, ज्वर - जर, स्नुषा - सोसे, सस्य - सासि, आलस्य - आलसु, माणिक्य - माणिक, न्यून - नून, न्याय - नाय, राजन् - राय, कुटज - कोडसिगे, लामज्ज - लामंच, मुंज - नोदे (मोदे), वल्लभ - वल्लह, कुठार - कोडलि, वर्धकि - बडगि, विद्या - बिज्जे, काष्ठ - कड्डि, निष्ठा - निट्टे, गोष्ठि - गोट्टि, कोष्ठ - कोट्ट, मञ्जिष्ठा - मंजिट्टिगे)

मंजिट्ठिगे), प्रतिष्ठा - हडिटे (हदिडे), ज्येष्ठा - जट्टे, सृष्टि - (सिट्टि)
सुट्टि, कष्ट - कट्ट, मुष्टिका - मुट्टिगे, इष्टका - इट्टिगे, दाडिम -
दाळिंब, कूष्माण्ड - कुंबळ, मर्कट - मंकड, क्रमुक - कवुंगु, लाञ्छन -
लच्चण, उज्जयिनी - उज्जेणि, निरूप - निरप, प्रसाधन - हसदन,
उत्तरीय - उत्तरिगे, वर्धमान - बद्धवण, (अटरूष) आटरूष - आडसोगे,
मरुवक - मरुग, खदिर - कैर, श्रेय - सय, वक्र - वंक, पानीय - पाणिय,
कण्टक - कंटय, प्राण - हरण, त्रास - तरस, मुख - मोग, युग - नोग,
मत्स्य - मच्च, स्वच्छ - सोच्च, विच्छन्द - बिच्चंद, छुरिका - छुरिगे,
घटिका - गळिगे, वीटिका - वीळेय, घुटिका - गुळिगे, पेटिका - पेळिगे,
कुटुम्ब - तुरुंबु, मूत - मूडे, सन्धि - संदु, ग्रन्थि - गंदु, मान्यता - मन्नणे,
स्फोटक - पोळिगे, स्फटिक - पळुकु, रथ्या - रगळे, लाम्पट्य -
लंपळिगे, ब्रह्मन् - बोम्म, बम्मेति च। प्रमाण - पवणु, मुकुल - मुगुळ्,
शुल्ब - सुल्, कूर - कूळ्, प्रतिपत् - पाडिव, द्वितीया - बिदिगे, तृतीया -
तदिगे, चतुर्थी - चौति, पंचमि - पंचवे, षष्ठि - चट्टि, सप्तमि - सत्तवे,
अष्टमि - अट्टवे, नवमि - नौमि, दशमि - दसवे, एकादशि - एयारसि,
द्वादशि - बादसे, त्रयोदशि - तेरसे, चतुर्दशि - चौदसे, पूर्णिमा - हुण्णवे
(पुण्णवे), अमावास्या - अवसे। इत्यादयो यथाप्रयोगमनुसर्तव्याः॥
व्याख्या॥ ... आकृतिगणत्वात् लक्ष्मि - लकुमि, लक्ष्मण - लकुमण,
व्याधि - बियदि, व्याध - बियद, व्याळ - बियळ, व्यासङ्ग - बियसंग,
झञ्झू - जंजु, छत्रिका - सत्तिगे, मठिका - मळिगे, पीठिका - पीळिगे,
पाठीन - पाळिल्, माठर - माळर, गाथा - गाहे, पुत्रिका - पुत्तळि,
प्रक्षालन - पक्खाळन, आक्षोट - अक्खोळ, क्रकच - करगस, शिल्पिक -
चिप्पिग, शिखरि - चिकरि, निश्चल - निच्चळ, सन्नाह - सन्नण,
सत्फल - सप्पळ, वृषभ - बसव, सुवासिनि - सोवासिणि,
तैलिक - तेल्लिग, हिंगुळक - इंगलिक, अयोग्र - अयोग, महिषि -
मैसि, पत्तन - पट्टण, आषाढ - आसडि, मन्थनि - मंतणि, फल्गुन -
फलुगुण, अङ्गन - अंगण, अङ्गार - इंगळ, शृङ्गार - सिंगर, गोपाल -
गोवळ, सुरपर्णि - सुरहोन्ने, चिकित्सा - चिकित्से, उच्च - उद्द,
वंश - वंच, हंस - अंचे, हार - आर, ऊष्म - उब्बे, इला - एळे,
दैव - देव्व, कुक्षि - कुक्के, मेठि - मेंटि, अर्क - एक्कै, एक्के इति च।
भिक्षु - बिच्चु, कक्ष - कच्च, चर्म - सम्म, चूर्ण - सुण्ण, स्वर्ण - सोन्न,
माघ - मागि इत्यादयो यथालक्ष्यमुपसंग्राह्यः॥

## पिंदुमुंदोर्दस्तः ॥161॥

वृत्तिः॥ पिंदु, मुंदु इत्येतयोर्दकारस्य तकारादेशो बहुलं भवति॥
प्रयोगः॥ पिंदु–पिंतु, मुंदु–मुंतु॥ द इत्यन्त्यस्य माभूत्॥

## आतेतोतं पुंस्यद्विदुदोः ॥162॥

वृत्तिः॥ बहुलमिति निवृत्तम्॥ अदु, इदु, उदु इत्येतेषां यथासंख्यं आत, ईत, ऊत इत्येते आदेशा भवन्ति पुल्लिङ्ग विषये॥
प्रयोगः॥ आतं, ईतं, ऊतं, आतनं, ईतनं, ऊतनं॥ पुंसीति किम्। अदु, इदु, उदु॥

## स्त्रियामाकेदीकेदूकेत् ॥163॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेषां यथासंख्यं आके, ईके, ऊके इत्यादेशा भवन्ति स्त्रीलिङ्ग विषये॥
प्रयोगः॥ आके, ईके, ऊके, आकेयं, ईकेयं, ऊकेयं, आकेयिं, ईकेयिं, ऊकेयिं॥ अत्र तकारा निर्देशार्थाः॥

## दोर्वः ॥164॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेषां दोर्वशब्द आदेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥
प्रयोगः॥ अवं, इवं, उवं, अवनं, इवनं, उवनं, अवक्, इवक्, उवक्, अवकं, इवकं, उवकं॥ दुग्रहणं सर्वादेश निवृत्त्यर्थम्॥
व्याख्या॥ - -॥ अवकिवकित्यादौ अतोनेकत्वेन्चाद्वादिगुणोक्तेः (154) इति वक्ष्यमाण सूत्रेण कुगागमः॥ तिङ्द्वादेः (24) इति सर्वादेशो मा प्रसांक्षीदिति दुग्रहणमित्याह दुग्रहणमिति। उत्तरार्थं च तत्। ओंबतु–फ्तोसादिम् (173) इति यावत्॥ स्त्रियां पुंसि चेत्यावोनावौ चैकत्वे (175) इति यावत्॥

## पेर्तोर्लुप् ॥165॥

वृत्तिः॥ दोरिति वर्तते। पेर्तु इत्येतस्य दोर्लुब् भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥
प्रयोगः॥ पेरं, पेर्नं, पेर्निं, पेर्क्, पेर्कं, पेर्किं॥

## अद्गुणोक्ते: ॥166॥

वृत्तिः॥ गुणवचनानां दोरदादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥
प्रयोगः॥ करियं, करियनं, इनियं, इनियनं, निडियं, निडियनं, किरियं, किरियनं, करियक्, करियकं, इनियक्, इनियकं, निडियक्, निडियकं, किरियक्, किरियकं॥

तोर्दः ॥ 167॥

वृत्तिः॥ गुणवचनानां दोस्तुशब्दस्य दशब्दादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये ॥

प्रयोगः॥ कुरिदं, कुरिदनं, नेरिदं, नेरिदनं, कुरिदक्, कुरिदकं, नेरिदक्, नेरिदकं ॥ तोरिति किम्। निडियं, निडियनं, निडियक्, निडियकं॥

ओक्दु पक्दोरेयः ॥168॥

वृत्तिः॥ ओक्दु, पक्दु इत्येतयोर्दोः ओय इत्यादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये ॥

प्रयोगः॥ ओकेयं, ओकेयनं, पकेयं, पकेयनं, ओकेयक्, ओकेयकं, पकेयक्, पकेयकं॥

पोसतो रंबः ॥169॥

वृत्तिः॥ पोसतु इत्येतस्य दोः अंब इत्यादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ पोसंबं, पोसंबनं, पोसंबक्, पोसंबकं ॥

केलवुपलवोरदबौच ॥170॥

वृत्तिः॥ केलवु, पलवु इत्येतयोर्दोः अत्, अब इत्येतावादेशौ भवतश्चकारा-देवश्च पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ केलर्, केलरं, केलबर्, केलबरं, केलंबर्, केलंबरं, पलर्, पलरं, पलबर्, पलबरं, पलंबर्, पलंबरं॥ एवं स्त्रियाम्॥

नितोर्बः ॥171॥

वृत्तिः॥ नितु प्रत्ययान्तस्य शब्दस्य दोर्ब इत्यादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ अनिबर्, अनिबरं, इनिबर्, इनिबरं, ओनिबर्, ओनिबरं॥ (238)

व्याख्या॥ अद्रिदुदोर्नितुः परिमाणे दोर्लुप्च (435) इति नितुर्विधास्यते।

बरिदोरुवौंबौ ॥172॥

वृत्तिः॥ बरिदु इत्येतस्य दोः उव, उंब इत्यादेशौ भवतः पुल्लिङ्गे स्त्रीलिङ्गे च विषये ॥

प्रयोगः॥ बरुवं, बरुवनं, बरुबं, बरुंबनं, बरुवक्, बरुवकं, बरुंबक्, बरुंबकं।

ओंबत्तुपत्तोस्तादिम् ॥173॥

वृत्तिः॥ ओंबत्तु, पत्तु इत्येतयोर्दोस्तकारेण सह दिमादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ ओंबदिंबर्, ओंबदिंबरं, पदिंबर्, पदिंबरं। एवं स्त्रियाम्॥

व्याख्या॥-- संख्याया वर् (251) इति वर् प्रत्यये ओंबत्तु पत्तोवरोर्वोबः (93) इति बादेशः॥

आवुदोरार् ॥174॥

वृत्तिः॥ दोरिति निवृत्तम्। आवुदु शब्दस्य आर् इत्यादेशो भवति पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ आर्, आरं, आरिं॥

आवोनावौ चैकत्वे ॥175॥

वृत्तिः॥ आवुदु शब्दस्य आवोन्, आव इत्यादेशौ भवतश्चकारादार् चैकत्वे पुल्लिङ्गे स्त्रीलिङ्गे च विषये॥

प्रयोगः॥ आवोन्, आवोनं, आवं, आवनं, आर्, आरं, आवोक्, आवोकं, आवक्, आवकं, आर्, आरं॥

व्याख्या॥ आवोक्, आवोकं। कुप् च नः (183) इति कुगागमो नलोपश्च॥

वा नप्येतुः ॥176॥

वृत्तिः॥ आवुदु इत्येतस्य ऎतुरित्यादेशो वा भवत्येकत्वे नपुंसकलिङ्गविषये॥

प्रयोगः॥ ऎतरिं, आवुदरिं, ऎतर्, आवुदर्, ऎतर्गळिं, आवुदर्गळिं, ऎतरोक्, आवुदरोक्॥ नपीति किम्। आवनिं, आवकिं॥

केत्यैच्च ॥177॥

वृत्तिः॥ आवुदु इत्येतस्य ऎकारश्चकारादेतुश्चादेशौ वा भवत एकत्वे केतिपरे नपुंसकलिङ्गविषये॥

प्रयोगः॥ ऎके, ऎतक्कें, आवुदक्कें॥

व्याख्या॥ ...॥ ननु ऎतक्कें, आवुदक्कें इत्युभयत्राप्यङ्गादेः कित् (269) इत्यरो लति रो र्विकृतात् (275) इति गेतो गकारस्य कादेशोऽभिमतः। ऎके इत्यत्र तुकादेशप्राप्ते रेवाभावात् कथं निर्देशः॥ न च गेतः क आदेः (274) इति सामान्य विधानात् तत्सिद्धिः॥

6.3.93 8.40P

ऎन् ममोः ॥178॥

वृत्तिः॥ आवुदु इत्येतस्य ऎन् इत्यादेशो वा भवत्येकत्वे मि अमि च परे नपुंसकलिङ्गविषये॥

प्रयोगः॥ ऎन्- आवुदु, ऎनं- आवुदं॥ ममोरिति किम्। ऎतरिं आवुदरिं॥

ओन् अचः ॥179॥

वृत्तिः॥ अच्प्रत्ययान्तस्य शब्दस्य ओन् इत्यादेशो वा भवत्येकत्वे विषये॥

प्रयोगः॥ माडिदों, माडिदोक्, माडिदं, माडिदक्, कूडिदों, कूडिदोक्, कूडिदं, कूडिदक्॥ अच इति किम्। माडिदं, माडिदक्, कूडिदं, कूडिदक्॥

व्याख्या॥ अच् कर्तृकर्मणोः (543) इति धातोः कृत्संज्ञकोऽच् विधायते। स चात्र विशेषणतयान्तग्राहको भवतीत्याह अच्प्रत्ययान्तस्येति॥ प्रत्युदाहरणे

माडिदं । धातोः (442) इत्यादिनाम् प्रत्ययः। माडिदक्। अकमः स्त्रियां (453) इति अकादेशः॥

ओंदोः पुंस्योर्व्वेश् ॥180॥

वृत्तिः॥ वेति निवृत्तम्। ओदु इत्येतस्य ओर्व्वेश् इत्यादेशो भवत्येकत्वे पुल्लिङ्गविषये शकारस्सर्वादेशार्थः॥

प्रयोगः॥ ओर्व्वं, ओर्व्वनं, ओर्व्वनिं॥

कुक् च स्त्रियाम् ॥181॥

वृत्तिः॥ ओंदु इत्येतस्य ओर्व्वेशित्यादेशो भवति कुगागमश्चैकत्वे स्त्रीलिङ्गविषये॥ उकारस्सुखमुखोच्चारणार्थः। ककारोन्त्य विध्यर्थः॥

प्रयोगः॥ ओर्व्वक्, ओर्व्वकं, ओर्व्वकिं॥

अट्दाणाचः ॥182॥

वृत्तिः॥ अट्, द, अण, अच् इत्येतत्प्रत्ययान्तानां शब्दानां कुगागमो भवति एकत्वे स्त्रीलिङ्गविषये॥

प्रयोगः॥ अटः। मेल्लेर्देयक्, नुण्दोडेयक्, पेरेवणेयक्॥ दस्य। अल्लिदक्, इल्लिदक्, ओल्लिदक्॥ अणस्य। तेंकणक्, बडगणक्, नडुवणक्, कडेयणक्॥ अचः। नोडिदक्, बेडिदक्, काडिदक्, कूडिदक्॥ एषामिति किम्। लंचंगुकि, अडुकुकि॥

व्याख्या॥ अट्स्वरात् (323) इत्यट्समासान्तः॥ दश्चेतः (422) इति दिक्छब्दादणः (421) इतिच दाणौ तद्धितौ॥ अच्कर्तृकर्मणोः (543) इत्यच्कृत्॥ - - ॥ कुगेव वर्तते नोर्व्वेशिति॥ लंचंगुकि। गुकिर्गृह्णाति (414) इति गुकिस्तद्धितः॥ अडुकुकि। कुकिस्ताच्छील्ये (545) इतिकुकिःकृत्॥

लुप् च नः ॥183॥

वृत्तिः॥ नकारान्तानां शब्दानां लोपो भवति कुगागमश्चैकत्वे स्त्रीलिङ्गविषये॥

प्रयोगः॥ आवोक्, माडिदोक्, कूडिदोक्, माडुवोक्, माक्वोक्॥

व्याख्या॥ (175), (173)

अतोऽनेकत्वे चाद्रादिगुणोक्तेः ॥184॥

वृत्तिः॥ अकारान्तानामद्रादीनां गुणवचनानां च कुगागमो भवत्येकत्वे-नेकत्वे च स्त्रीलिङ्गविषये॥

प्रयोगः॥ अवक्, इवक्, उवक्, आवक्, पेरक्, करियक्, बिळियक्, इनियक्, तोरिदक्, नेरिदक्, पिरियक्, किरियक्, अवक्दिर्, इवक्दिर्, उवक्दिर्, आवक्दिर्, पेरक्दिर्, करियक्दिर्, बिळियक्दिर्॥ अत इति किम्। आके, ईके॥

## अनेयस्य ॥185॥

वृत्तिः॥ अनेय प्रत्ययान्तानां शब्दानां कुगागमो भवत्येकत्वे नेकत्वे च स्त्रीलिङ्गविषये ॥
प्रयोगः॥ पत्तनेयक्, पत्तनेयक्दिर्, ओरऽनेयक्, ओरऽनेयक्दिर्, मूरनेयक्, मूरनेयक्दिर् ॥
व्याख्या ॥ (434)

## मगस्य ॥186॥

वृत्तिः॥ मग शब्दस्य कुगागमो भवत्येकत्वेनेकत्वे च स्त्रीलिङ्गविषये ॥
प्रयोगः॥ मगक्, मगक्दिर्, मगकं, मगक्दिरं॥

## उक् सामान्ये ॥187॥

वृत्तिः॥ मगशब्दस्य उगागमो भवति अेकत्वे सामान्य विषये ॥
प्रयोगः॥ मगु ॥ (Maga takes the augment u in the singular number common gender.)

## दोः क्ककनेकत्वे ॥188॥

वृत्तिः॥ मगशब्दस्य दोः क्ककागमो भवत्यनेकत्वे सामान्य विषये। क्ककिति द्वि ककारको निर्देशः॥
प्रयोगः॥ मक्कक्, मक्ककं॥

## नार्विरि ॥189॥

वृत्तिः॥ अरि विरि च विषये स्त्रियां कुगागमो न भवति॥
प्रयोगः॥ अवर्, ईवर्, इनियर्, कूडिदर्॥ अर्विरीति किम्। अवक्दिर्, इवक्दिर्॥
व्याख्या॥ ... । स्त्रीपुंसादर्दिर्विर् (239) इत्यादयस्त्री विषये विधास्यन्ते॥

## जातिशब्दादितिः ॥190॥

वृत्तिः॥ अत इतिवर्तते। अकारान्ताज्जातिवाचकाच्छब्दादिति प्रत्ययो भवति स्त्रियां विषये॥
प्रयोगः॥ ब्राह्मणिति, पार्विति, क्षत्रियिति, अरसिति॥ एवं ओक्कलिगिति, गाणिगिति, अगसिति (अगसगिति), कन्नडिगिति, कोंकणिगिति॥

## पुंयोगे ॥191॥

वृत्तिः॥ अकारान्ताच्छब्दात् पुंयोगे र्चे इति प्रत्ययोभवति स्त्रियां विषये॥
प्रयोगः॥ अरसन पेंडति, अरसिति। एवं प्रधानिति, तळवरिति, कुंकिगिति, तोटिगिति॥ (words ending in a, whose meaning implies a husband, take the affix iti in the feminine gender)

## वडिगोगोक्किगात् ॥192॥

वृत्तिः॥ वडिग, इग, उक्किग इत्येतत्प्रत्ययान्ताच्छब्दादिति प्रत्ययो

भवति स्त्रियां विषये ॥
प्रयोग :॥ वडिग । पावडिग पावडिगिति, पूवडिग पूवडिगिति, मालेवडिग मालेवडिगिति॥ इग । सरवंदिगिति, पट्टसालिगिति, गंदिगिति ॥ उक्किग । देवुक्किगिति, पाकुक्किगिति, करदुक्किगिति॥
व्याख्या ॥ वडिगो जातौ (416), इग: पण्यां (405) कुर्वट्युक्किगश्च (410) इत्यादि सूत्रैर्वडिगादि प्रत्यया वक्ष्यन्ते ।

गोगाद् इश्च ॥193॥

वृत्ति:॥ गप्रत्ययान्ता दुगप्रत्ययान्ताच्च शब्दादि प्रत्ययो भवति चकारादिति प्रत्ययस्च स्त्रियां विषये ॥
प्रयोग :॥ मातुगि, मातुगिति, बूतुगि, बूतुगिति, लंचगि, लंचगिति, नारुगि, नारुगिति, बेरुगि, बेरुगिति, ताकुगि, ताकुगिति॥
व्याख्या ॥ तेन जीवति गवणिगो (415) व्यञ्जनादुग: (424) इत्यादिभिर्ग प्रत्यय डग प्रत्ययश्च विधास्यैते ॥

अप्कात् ॥194॥

वृत्ति:॥ अप् प्रत्ययान्तात् कप्रत्ययान्ताच्च शब्दादि प्रत्ययो भवति स्त्रियां विषये ॥
प्रयोग :॥ निडुगण्णि, निडुवेरलि, सुक्कुंगुरुळि, करिकि, बिळिकि, मुदुकि ॥
व्याख्या ॥ अब् बहुव्रीहे:(327) इत्यप्समासान्त:। गुणोक्तेः कोदुळुप्च (403) इति कौत्स्यर्थ प्रत्ययः॥

आयताद् अेच्च ॥195॥

वृत्ति:॥ आयत प्रत्ययान्ताच्छब्दादेत् प्रत्ययो भवति चकारादि प्रत्ययश्च स्त्रियां विषये ॥
प्रयोग :॥ सूकायते, सूकायित, अवसरायते, अवसरायित ॥
व्याख्या ॥ आयतोधिकृते बहुकं (425) इति वक्ष्यते ।

वणिगवंतेचात् ॥196॥

वृत्ति:॥ वणिग, वंत, इच इत्येतत्प्रत्ययान्ताच्छब्दादेत् प्रत्ययो भवति स्त्रियां विषये ॥
प्रयोग :॥ लंचवणिगे, ऊरवणिगे, सिरिवंते, गुणवंते, कालुरिचे, करहडिचे॥
व्याख्या ॥ तेन जीवति गवणिगो (415), तदस्यास्त्यस्मिन्निति वंत: (402), इचोहस्वश्चो पान्त्यस्य (420)

सितगादिभ्य: ॥197॥

वृत्ति:॥ सितगादिभ्यश्शब्देभ्य अेत् प्रत्ययो भवति स्त्रियां विषये॥

प्रयोग:॥ सितगे, चदुरे, पाण्बे, जोडे, कळ्ळे, बेळ्ळे, हेड्डे, ओग्गे, बोक्के, रूचे, बंडे, मुंडे, तुंटे ॥ सितगादयः प्रयोगगम्याः॥
व्याख्या ॥ सितगादिराकृतिगणः ॥ तेन लंडे, केप्पे, तेपे इत्यादयो ग्राह्याः॥

रात् इतिः ॥198॥

वृत्ति:॥ र प्रत्ययान्ताच्छब्दादिति प्रत्ययो भवति स्त्रियां विषये ॥
प्रयोग:॥ कुंबरिति, कम्मरिति ॥
व्याख्या ॥ रः कम्मकुंबात् (412)

ति: ॥199॥

वृत्ति:॥ र प्रत्ययान्ताच्छब्दात्ति प्रत्ययो भवति स्त्रियां विषये॥
प्रयोग:॥ कुंबरति, कंमरति ॥ योगविभाग उत्तरार्थः ॥

वक्कवक्काल्लुप् च ॥200॥

वृत्ति:॥ ओक, वक्क इत्येतत्प्रत्ययान्ताच्छब्दरूपात् ति प्रत्ययो भवति। तयोर्लोपश्च स्त्रियां विषये ॥
प्रयोग:॥ मडिवक्ति, सेज्जेवक्ति, अडपवक्ति, पडेवक्ति ॥
व्याख्या ॥ (426)

कारगाराद् दोरश्च ॥201॥

वृत्ति:॥ कार प्रत्ययान्ताद् गार प्रत्ययान्ताच्छब्दात्ति प्रत्ययो भवति। तयो र्दोरेफादेशश्च स्त्रियां विषये ॥
प्रयोग:॥ नगेकार्ति, नुडिकार्ति, बगेकार्ति, आटकार्ति, बेटकार्ति, ओरेगार्ति, गालेगार्ति, बळेगार्ति, जूजुगार्ति ॥
व्याख्या ॥ कारः प्रवणव्यापृतयोः (423), गारो जातौ (411)

अरस्यादयः ॥202॥

वृत्ति:॥ अरस्यादयश्शब्दा निपात्यन्ते ॥
प्रयोग:॥ अरसि, पार्वति, ओक्कलिति, सेट्टिति, गेणति, जोगिति, कणिति ॥ इत्यरस्यादिराकृतिगणः॥

लिङ्गात् सुप् ॥203॥

वृत्ति:॥ लिङ्गसंज्ञकाच्छब्दात् सुपो भवन्ति ॥
प्रयोग:॥ ओगं, वरं, वलं, अय्यो, ओहो, अहो ॥

कर्मण्यम् ॥204॥ 13.3.93 9.50am

वृत्ति:॥ क्रियाव्याप्यं कर्म। तस्मिन्ननुक्ते कारके लिङ्गादम् प्रत्ययो भवति॥
प्रयोग:॥ घटमं माडिदं कुंबरं, मनेयं गेय्दं कंमरं, कूकनं बाणसिगं, बिल्लं कीसिदं बडगि, पक्कुवं कडिदनोक्कलिगं, ऊरनेय्दिदं पथिकं, नेसरं नोडिदं पार्वं॥

## गतिशब्दार्थाकर्मणां प्रयोज्ये कर्तरि ॥२०५॥

वृत्तिः॥ गत्यर्थानां शब्दार्थानामकर्मणां धातूनां सम्बन्धिनि प्रयोज्येऽनुक्ते कर्तर्यम् प्रत्ययो भवति॥

प्रयोगः॥ गत्यर्थे। अरसं भृत्यननूरनेयदिसिदं, गोवळं तुरुगळं मनेयं पोगिसिदं, ओदनरसननानेयनेरिसिदं॥ शब्दार्थे। अरसं कांतेयं सविवातं नुडिसिदं, पितरं पुत्रनं तोदल नुडियं नुडिसिदं, अरसियरगिळियं मेल-नुडियं नुडिसिदळ्॥ अकर्मणि। नायकं केळदियं नाच्चिसिदं, कांतेयनरसं तल्पदोळ् मलगिसिदं, इंद्रं जिननं मेरुविनोळ् मिसिसिदं॥ एषामिति किम्। पुरोहितनरसनिं दानमं कोडिसिदं, अरसं गौडनिं पोलमनुळिसिदं॥ प्रयोज्य इति किम्। ऊरनेय्दिदं पथिकं, कांते नुडियं नुडिदळ्॥(260)

## बोधाशनाननतीनां वा ॥२०६॥

वृत्तिः॥ बोधाद्यर्थानां धातूनां प्रयोज्ये कर्तर्यम् प्रत्ययो वा भवति॥

प्रयोगः॥ गुरु शिष्यनं व्याकरणमनोदिसिदं। शिष्यनिं इति वा। उपाध्यायं माणवकनं वेदमं पठिसिदं। माणवकनिं इति वा। पितृ पुत्रनं कथेयं पेळिसिदं। पुत्रनिं इति वा। जननि कूसं पायसमनुणिसिदळ्। कूसिं इति वा। नंदगोप-नच्युतनं बेण्णेयं तिनिसिदं। अच्युतनिं इति वा। दादि पसुळेयं पालं कुडिसिदळ्। पसुळेयिं इति वा। तंदे मगनं गुरुविंगे नमस्करिसिदं। मगनिं इति वा। गुरु शिष्यनं जिनंगेरगिसिदं। शिष्यनिं इति वा। अब्बेकूसमिं द्विगे पोडमडिसिदळ्। कूसिं इति वा॥

## कालाध्वनोरम् व्याप्तौ ॥२०७॥

वृत्तिः॥ कालो मुहूर्तादिः। अध्वा गन्तव्य क्षेत्रं क्रोशादि। व्याप्तिः स्वेन सम्बन्धेनात्यन्त संयोगः॥ कालेऽचाध्वनि वर्तमानाल्लिङ्गादम् भवति व्याप्तौ द्योत्यमानायाम्॥

प्रयोगः॥ काले। अरुदिंगळं तळ्विदं, जावमं तोळल्दं॥ अध्वनि। अरेगावुदमं परिदं, गावुदमनोडिदं॥ व्याप्ताविति किम्। मासदोळो-दिदं, गावुददोळोडिदं॥ अत्र पाठमात्रं गम्यते न व्याप्तिः। पुनरम् ग्रहणं नित्यार्थम्॥ 19.3.93 12.58

## इम् सिद्धौ ॥२०८॥

वृत्तिः॥ सिद्धिः क्रियाफलनिष्पत्तिः। तस्यां गम्यमानायां कालाध्वनोर्वर्तमाना-ल्लिङ्गादिम् भवति व्याप्तौ द्योत्यमानायाम्॥

प्रयोगः॥ मासदिं व्याकरणं पूर्णमादुदु, वरिसदिं शास्त्रं मुगिदुदु. क्रोशदिं वेदमनोदिदं, गावुददिं शास्त्रमं पठिसिदं॥ सिद्धाविति किम्।

मांसमं व्याकरणमनोदिदं, क्रोशमं गद्यमनोदिदं। अत्र व्याप्तिमात्रं गम्यते न सिद्धिः॥ व्याप्ताविति किम्। मासदोळोदिदं, क्रोशदोळोदिदं॥ अत्र सिद्धिमात्रं गम्यते न नैरन्तर्यम्॥

हेतुकर्तृकरणेत्थंभूतलक्षणे ॥२०९॥

वृत्तिः॥ फलसाधनयोग्यः पदार्थो हेतुः। स्वतन्त्रः कर्ता तत्प्रयोजकश्च। साधकतमं करणं। इमं कंचित् प्रकारमापन्न इत्थंभूतः। सलक्ष्यते येन तदित्थंभूतलक्षणं। हेत्वाद्यर्थे वर्तमाना लिङ्गादिम् भवति॥
प्रयोगः॥ हेतौ। धनदिं कुलं, बिज्जेयिं जसं, तत्वज्ञानदिं मोक्षं॥ कर्तरि। कुंबरनिं माडल्पट्टुदु, अक्कसालेयिं पदकंगेय्यल्पट्टुदु, अरसनिं बाणसिगनिन्नं माडिसल्पट्टुदु, हरियिंदर्ज्जुननिं कर्ण्णं कोल्लिसल्पट्टं॥ करणे। कोडलियिं कडिदं, कुडुगोलिं कोय्दं॥ इत्थंभूतलक्षणे। कमंडलुविं भिक्षुवं कंडं, चंडिकेयिं वटुवनरिदं॥

यद्भेदात् तद्वदाख्या ॥२१०॥

वृत्तिः॥ भेदः प्रकारः। यस्य प्रकारात्तद्वतः प्रकारिमतोर्थस्याख्या भवति। तद्वाचिनो लिङ्गादिम् भवति॥
प्रयोगः॥ कण्णिं कुरुडं, कालिं कुंटं, किवियिं मोटं, जातियिं पार्व्वं, प्रकृतियिनोक्किलं॥ यद्ग्रहणं स्यानि निर्देशार्थं॥ भेदग्रहणं किम्। चट्टिगकं पुगिसु, कुंतगकं बरिसु॥ तद्वदाख्येति किम्। कण्कुरुडीतंगे, ब्राह्मण्यं जातियीतंगे॥ आख्याग्रहणं प्रसिद्ध परिग्रहार्थं। तेन कण्णिं दीर्घं इति न भवति॥

सहार्थेनाप्रधाने ॥२११॥

वृत्तिः॥ सहार्थैश्शब्दैर्योगे साहित्यप्रतियोगिन्यप्रधानेर्थे वर्तमाना लिङ्गादिम् भवति॥
प्रयोगः॥ मगनिं कूडिबंदं, लक्ष्मियिं बेरसि हरियोप्पिदं, उमेयिं संगडिसि मेरेदनापेेेदलेयं॥ अप्रधान इति किम्। मगनिं कूडि मेरेदं ब्रह्मं। ब्रह्मशब्दान् माभूत्॥

ओडने न ॥२१२॥

वृत्तिः॥ ओडने शब्देन योगे लिङ्गादिम् न भवति॥
प्रयोगः॥ मगनोडने बंदं, गुरुविनोडने पोदं॥

गेदाप्ये दैर्यैः ॥२१३॥

वृत्तिः॥ दैर्यैराप्येकारके लिङ्गाद्गेद्भवति तकारो निर्देशार्थः॥
प्रयोगः॥ ब्राह्मणंगे गोवं कोट्टं, यतिगे भिक्षमनिक्किदं, बसदिगे पूमालेयनित्तं॥

**शक्तिरुचीर्ष्यासूयाद्रोहक्रोधमत्सरभीत्युन्नतिस्वभावावनतीष्टानिष्टसादृश्यप्रतिनिध्यर्थैः ॥214॥**

वृत्तिः॥ शक्तिस्सामर्थ्यं, रुचिः प्रीतिः, अक्षान्तिरीर्ष्या, गुणेषु दोषाविष्करणमसूया, अपकारो द्रोहः, अमर्षः क्रोधः, अन्यशुभद्वेषो मत्सरः, भीतिर्भयं, उन्नतिराधिक्यं, स्वभावः प्रकृतिः, अवनतिरभिवादः, इष्टं हितं, अनिष्टमहितं, सादृश्यमुपमानं, प्रतिनिधिः प्रतिकल्पः॥ शक्त्याद्यर्थैश्शब्दैर्योगे लिङ्गाद्गेत् प्रत्ययो भवति॥

प्रयोगः॥ शक्त्यर्थे। मल्लंगे मल्लं शक्तं, आतंगीतं सामर्थ्यं॥ रुच्यर्थे। धार्मिकंगे धर्मं रुचियक्कुं, बेनकं गुंडलिगेयक्कुं॥ ईर्ष्यार्थे। कविगे कवियीर्ष्यगेय्वं, कुजनं सुजनंगे सैरिसं॥ असूयार्थे। धर्मंगे कौरवनसूयेगेय्वं, रामंगे रावणं दोषमानारोपिपं॥ द्रोहार्थे। अरसंगीतं द्रोहि, ओडेयंगपकारिदासेरं॥ क्रोधार्थे। कळ्ळंगर संमुनिवं, नल्लंगि नियक्कंटिसिदक्कं॥ मत्सरार्थे। अज्जंगज्जं मच्चरिपं, सवतिगे सवति पुरुडिपक्कं॥ भीत्यर्थे। पापक्के अंजुगुं तक्कं, पुलिगक्कुगुंपिडि॥ उन्नत्यर्थे। लोकक्कीतनुन्नतं, हरिगे हरनधिकं॥ स्वभावार्थे। कपिगे चपलतें सहजं, सिंहक्के शौर्यं प्रकृति॥ अवनत्यर्थे। जिनंगे नमस्करिसिदं, तंदेगे पोडमट्टं॥ इष्टार्थे। याज्ञिकंगे स्वर्गमिष्टं, पशुविंगे हितं तृणं॥ अनिष्टार्थे। लोकक्कनिष्टं बरं, मल्लंगोक्कितल्लु वज्रमुष्टि॥ सादृश्यार्थे। गोविंगे गवयं सदृशं, चंद्रंगे समानं मुखं॥ प्रतिनिध्यर्थे। जेनुतुप्पक्के सक्करेसल्लुदु, पुष्करक्केरंडमक्कुं॥ शक्त्याद्यर्थैरिति किम्। देवदत्तन मगं, यज्ञदत्तन कमंडलु॥

**आशिष्युद्देश्ये ॥215॥**

वृत्तिः॥ इष्टार्थाशंसनमाशीः। यदुद्दिश्य विधिस्तदुद्देश्यं। उद्देश्ये वर्तमानाल्लिङ्गाद् गेत् प्रत्ययो भवति आशिषि गम्यमानायाम्॥

प्रयोगः॥ देवदत्तंगे भद्रमक्के, जिनदत्तंगे दीर्घायुवक्के, लोकक्के सुखमक्के, प्रजेगळ्गे स्वस्तियक्के॥ आशिषीति किम्। देवदत्तन सुखं, गुरुदत्तन भद्रं॥ उद्देश्य इति किम्। देवदत्तंगे कुशलमक्के। आशास्ये मा भूत्॥

**स्वाहास्वधावषड्भिः ॥216॥**

वृत्तिः॥ स्वाहादिभिर्योगे लिङ्गाद्गेद् भवति॥

प्रयोगः॥ अग्निगे स्वाहाकारं, पितृगळिगे स्वधाकारं, इंद्रंगे वषट्कारं॥

तादर्थ्ये ॥ २१७॥

वृत्तिः॥ तदर्थभावे द्योत्ये लिङ्गाद् गेद् भवति॥
प्रयोग:॥ मोक्षक्के तत्वज्ञानं; कुंडलक्के चिन्नं, अवधातक्कोनके, तेर्गो मरं॥

उत्पातेन ज्ञाप्ये ॥२१८॥

वृत्तिः॥ उत्पातेन ज्ञाप्यमानेर्थे वर्तमानाल्लिङ्गाद् गेद् भवति॥
प्रयोग:॥ बरक्के बेळ्गिंगु, लोकनाशक्के कप्पेयच्चंडिवे, बिरुविसिल्गो केंमिंचु॥ उत्पातेनेति किम्। अरसन सत्तिगे, गुरुगळ कमंडलु॥ ज्ञाप्य इति किम्। लोकनाशक्के काकं बिकिदाडुदु॥ काक-शब्दान् मा भूत्॥
व्याख्या॥ ननूत्पातो नाम भाव्यनिष्टसूचकं भौमनाभसादि भेदं मण्डूकशिखादि। तेन ज्ञाप्यमानं च लोकानिष्टं क्षामडामरादि। ...

बगेतः कर्मणि वा यतोवज्ञा ॥२१९॥

वृत्तिः॥ यस्मादवज्ञान्यस्य ज्ञायते तस्माद् बगेधातोः कर्मणि वर्तमानाल्लिङ्गाद् गेद् वा भवति॥
प्रयोग:॥ अवननातं तृणक्के बगेदं, तृणमं इतिवा। खळनं सौमित्रि पुळित कवडेगे बगेदं, पुळित कवडेयं इति वा। नीनातन नोंदडेकेगे बगेदय्, बंदडेकेयं इति वा। तृणादिभ्यो निकृष्टं मन्यत इत्यर्थः॥ बगेत इति किम्। अवनं पुल्लं तिळिदं॥ कर्मणीति किम्। स्मरं हरनं पुल्गो बगेदं। स्मरशब्दान्न भवति॥ यत इति किम्। रामं रावणननोंदु कड्डिगे बगेदं। रावण शब्दान्न भवति॥ अवज्ञेति किम्। भीमं धर्मजननेसे हरियं बगेदं। हरेरभ्यधिकं मन्यत इति प्रशंसा॥

हेतावत्तणिं ॥२२०॥

वृत्तिः॥ हेतौ वर्तमानाल्लिङ्गादत्तणिं प्रत्ययो भवति।
प्रयोग:॥ दानदत्तणिं भोगं, ज्ञानदत्तणिं मोक्षं, उज्जुगदत्तणिं सिरि, किच्चिनत्तणिं पोगे॥ हेताविति किम्। मोक्षद सुखं॥

अवधावपाये ॥२२१॥

वृत्तिः॥ अपायो विश्लेषो वास्तवः प्रातीतिको वा। तस्मिन् गम्य-माने यदवधिभूतं तत्र वर्तमानाल्लिङ्गादत्तणिं भवति॥
प्रयोग:॥ मरदत्तणिं पण्बीळ्दुदु, गिरियत्तणिं कल्लुरुळ्दुदु, ऊरत्तणिं बंदं, पुलियत्तणिं भीति, पापदत्तणिं पेळ्गु। चित्तसंक्षोभ

पूर्वकं ततो निवर्तत इत्यर्थः॥ उपाध्यायनत्तणिं मरेयादं, गुरुगळ-त्तणिं केलं बोक्कं। ततो दृश्यतयापयातीति॥ बीजदत्तणिं दंकुर-मादुदु, शंगादत्तणिं शरमादुदु। तस्मादात्मानं प्रति लभमानो निस्स-रतीति॥ मुगिलत्तणिं मिंचुमिंचित्तु। ततो निःसृत्य ज्योतिर्विद्योतते विद्योतमानं वा ततो निर्धावतीति॥ पापदत्तणिं रक्षिसिदं, बरदत्तणिं सलहिदं। तदुपघातप्रतीकारेण ततो निवर्तयतीति॥ हिमवत् पर्व्वतदत्तणिं गंगे पुट्टित्तु। तत्र प्रथममुपलभ्यमाना ततो निस्सरतीति। सन्ततत्वान्नात्यन्तापक्रमः॥ अधर्मदत्तणिं पेसिदं, पापदत्तणिं मोहिसिदं। जुगुप्सादिपूर्वकं ततो भयेनापैतीति॥ अर्ज्जुननत्तणिं वासुदेवनधिकं, नकुलनत्तणिं सहदेवं किरियं, आतनत्तणिं दीर्तं पट्टु इत्यादौ सर्वत्र वासुदेवादयोर्जुनादिभिराधिक्यादिना सम्प्रष्टास्तेभ्यो तिशायनादिना धर्मेण विभक्ताः प्रतीयन्त इति बौद्धोपायः॥

## ओळधिकरणे ॥२२२॥

वृत्तिः॥ क्रियाश्रयस्य कर्तुस्तत्कर्मणो वा य आधारस्तदधिकरणं। तत्र वर्तमानाल्लिङ्गादोळ् प्रत्ययो भवति॥
प्रयोगः॥ पासिनोळ् मलगिदं, गद्दुगेयोळ् कुळ्ळिर्दं, आगसदोळ् वक्कि, मंदिरदोळ् तुरुगळ्, ओळ्ळोळ्ळेणे, पालोळ् मधुरं, गंगेयोळ् घोषं, पोळेयोळ् गेर्दं॥

## यतो निर्धारणम् ॥२२३॥

वृत्तिः॥ जातिगुणक्रियाभिस्समुदायादेकदेशस्य पृथक्करणं निर्धारणं। यतो निर्धारणं तत्र वर्तमानाल्लिङ्गादोळ् भवति॥
प्रयोगः॥ जात्या। मानवरोळ् पुरुषरुत्तमर्, पुरुषरोळ् क्षत्रियर् शूरर्॥ गुणेन। तुरुगळोळ् कारकळ् पालुक्कुदु, वस्त्रंगळोळ् बेळ्बट्टेयो ळ्ळित्तु॥ क्रियया। अवरोळोड्डुवं काल्वेगि पण्गळोळ् बीळ्वदुत्तनिवण्॥ क्वचिद् द्रव्येणापि। अवरोळातं कलि, इवरो-ळीतन्नेम्मातं॥ यत इति निर्धार्ये मा भूत्॥

## साधुनिपुणार्थैः पूज्ये ॥२२४॥

वृत्तिः॥ साधु, निपुण इत्येतदर्थैश्शब्दैर्योगे पूज्यवाचिनि वर्तमाना-ल्लिङ्गादोळ् प्रत्ययो भवति॥
प्रयोगः॥ तायोळ् साधु, तायोळोळ्ळिदं, गुरुविनोळ् सहजं, पूजेयोळ् जाणं, जपदोळ् चतुरं, विद्येयोळ् निपुणं, चित्रदोळ् कुशलं॥

साधुनिपुणार्थैरिति किम्। तंदेयध्वनं, ताय मोलेयनुंडं ॥ पूज्य इति किम्। कळविनजाणं ॥

योगेऽद ॥२२५॥

वृत्तिः॥ योगस्सम्बन्धः। सचानेकविधः। तस्मिन् विवक्षिते लिङ्गादत् प्रत्ययो भवति॥

प्रयोगः॥ अरलकंपु, कण्णबेळ्पु, ऊरोडेयं, मरदकोंबु ॥

कर्तृकर्मणोः कृति भावे ॥२२६॥

वृत्तिः॥ भावे विहितोयः कृत् तद्योगे कर्तरि कर्मणि च कारके अद् भवति॥

प्रयोगः॥ देवदत्तन घटद माळ्के, देवदत्तन इरवु, यज्ञदत्तन निद्रे॥ कर्तृकर्मणोरिति किम्। मनेयोळिरवु, पोलदोळिक्कें॥ कृतीति तद्धिते मा भूत्॥ भाव इति किम्। देवदत्तनिं माडल्पट्टुदु, देवदत्तं घटमंमाडिदं॥

युक्ते ॥२२७॥

वृत्तिः॥ तिङायुक्तयोः कर्तृकर्मणोः मकारस्सुब् भवति॥

प्रयोगः॥ देवदत्त निर्द्दपं, यज्ञदत्तं पोदपं॥ उक्ते इति किम्। कुलालनिं घटं माडल्पट्टुदु, अक्कसालेयिं पदकंगेय्यल्पट्टुदु। कर्मणि मा भूत्॥ कुलालं घटमं माडिदं। सकर्मके मा भूत्॥

आमन्त्रणे ॥२२८॥

वृत्तिः॥ कार्यान्तरव्यापृतस्य स्वाभिमुखीकरणमामन्त्रणं। तस्मिन् विवक्षिते लिङ्गान् मकारस्सुब् भवति॥

प्रयोगः॥ देव बिंनपं, सति केळ्, ओले देवदत्त, ओले भूप॥ (252)

यस्य भावो भावलक्षणम् ॥२२९॥

वृत्तिः॥ भावः क्रिया। यस्य भावो भावान्तरस्य लक्षणं ज्ञापकं भवति तत्र वर्तमानाल्लिङ्गान् मकारस्सुब् भवति॥

प्रयोगः॥ पक्कु कारेयल् बंदं, रमणि नोडल् बंदं॥ यस्येति प्रकृत्यर्थं॥ भाव इति किम्। तापसेगे जडेयिंदुटं॥ भावलक्षणमिति किम्। आवंगूटमातं देवदत्तं॥ (586), (587)

विशेषणाद् वा ॥२३०॥

वृत्तिः॥ विशेषणवाचिनो लिङ्गान् मकारः सुब् वा भवति। पक्षे विशेष्यविभक्तिरेव ॥

प्रयोगः॥ धीरनुदारं कलिगं।
भीरं भूपतिकुमारकंगादुदयं।
पक्षे धीरंगे, उदारंगे, कलिगे, गंभीरंगे ॥

व्यत्ययो बहुलम् ॥ २३१॥

वृत्तिः॥ सुपां बहुलं व्यत्ययो भवति॥
प्रयोगः॥ तत्र ओकमोमेकारः। परियणदोळुं - परियणमुं,
घटमं माडिदं, घटं माडिदं॥ मिम्गेत्स्वम्। देवदत्तनिर्दं - देवदत्त- 20/3/93 8.10
ननिर्दं, पूर्विदर्च्चिसिदं - पूर्वनर्च्चिसिदं, लोकक्कर्धिकं - लोकमनधिकं॥
अत्तणिभीम्। मरदत्तणिंदले बीळ्दुदु - मरदिंदले बीळ्दुदु॥ ओळमत्सुणेत्।
ओळक्कोळेंणे - ओळ्गोंणे, शिष्यनं कलिपसिदं - शिष्यंगे कलिपसिदं,
जगदोडेयं - जगक्कोडेयं॥ इममोरत्तणिं। कोडलियिंकडिदं -
कोडलियत्तणिं कडिदं, आतनं बेसगोंडं - आतनत्तणिं बेसगोंडं॥
ओळमम्स्वद्। ओळक्कोळेंणे - ओळळेंणे, नीबंदय - निन्नबंदय,
ओन्नं मरेदं - ओन्नमरेदं॥ ओकिमि। कुडुगोलिंकोयदं - कुडुगो-
लोळ्कोयदं॥

गकनेकत्वे सुपि ॥२३२॥

वृत्तिः॥ लिङ्गाद् गळ् प्रत्ययो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ नयनंगळ्, नयनंगळं, नयनंगळिं, नयनंगळ्गे,
नयनंगळत्तणिं, नयनंगळ, नयनंगळोळ्, एवं केशंगळित्यादि॥

नाड्वादिभ्यः ककुब् वा ॥२३३॥

वृत्तिः॥ नाडु इत्यादिभ्यश्शब्देभ्यः ककुप् प्रत्ययो वा भवत्यनेकत्वे
सुपि परे॥ उकार उच्चारणार्थः। पकारः ककुप इति विशेषणार्थः॥
प्रयोगः॥ नाळ्कळ्, नाडुगळ्, नाळ्गळ्; कोळ्कळ्, कोडुगळ्, कोळ्गळ्;
बीळ्कळ्, बीडुगळ्, बीळ्गळ्॥ नाड्वादयः प्रयोगगम्याः॥
व्याख्या॥ नाळ्कळ्। रूडोरळं व्यञ्जने (82) इति ळकारादेशः॥
नाडुगळ्, नाळ्गळ् इति। वागि (85) इति विकल्पः॥ ---

ओल्लाद् वुः ॥२३४॥

वृत्तिः॥ ओल्लशब्दाद् वु प्रत्ययो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ ओल्लवु, ओल्लवं, ओल्लवरिं॥

अद्वादेर्दोर्लुप् च ॥२३५॥

वृत्तिः॥ अद्वादेर्गणाद् वु प्रत्ययो भवति। दोर्लोपश्चानेकत्वे सुपि परे॥
प्रयोगः॥ अवु, इवु, उवु, आवुवु, पेरवु॥

गुणोक्तेर्यश्च ॥२३६॥

वृत्तिः॥ गुणवचनेभ्यो वु प्रत्ययो भवति दोर्यशब्दादेशश्चानेकत्वे सुपि परे॥
प्रयोगः॥ इनियवु, पिरियवु, कडियवु, निडियवु, किरियवु, बिळियवु,
करियवु॥

## तो दः ॥२३७॥

वृत्तिः॥ गुणवचनानां दोस्तकारस्य दकारादेशो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ ओक्किदुकु, मेल्लिदुकु, तेक्किदुकु, बेद्दिदुकु॥

## नानित्वादिभ्यः॥२३८॥

वृत्तिः॥ अनित्वादिभ्यश्शब्देभ्यो नेकत्वे सुपि परे यदुक्तं तन्न भवति॥
प्रयोगः॥ अनितु, इनितु, ओनितु, अेषु, ऐषु॥ अनित्वादिराकृतिगणः॥ (171)

## स्त्रीपुंसादर्दिर्विर् बहुळम् ॥२३९॥

वृत्तिः॥ स्त्रीवाचकात् पुरुषवाचकाच्च शब्दात् अर्, दिर्, विर् एते प्रत्यया बहुळं यथा लक्ष्यं भवन्त्यनेकत्वे सुपि परे॥
प्रयोगः॥ अर्। स्त्रियर्, अत्तेयर्, सोसेयर्, सुतेयर्, पुरुषर्, सुतर्, अवर्, इवर्, उवर्, ओल्लर्, इनियर्, बरुवर्, पोसबर्॥ दिर्। अत्तेदिर्, सोसेदिर्, तायिदिर्, तंगिदिर्, तंदेदिर्, मावंदिर्, भावंदिर्, अण्णंदिर्, तम्मंदिर्॥ विर्। अत्तेविर्, सोसेविर्, तायविर्, तंगिविर्, तंदेविर्, भ्रातृविर्॥ बहुळग्रहणात् क्वचिद् गळपि भवति॥ तायगळ्, तंदेगळ्, अत्तेगळ्, सोसेगळ्॥ क्वचिद् गळेव नान्यत्। नीगळ्, तांगळ्, आंगळ्॥ (257)

## तोक्कुपेंडादिर् ॥२४०॥

वृत्तिः॥ तोक्कु, पेंड इत्येताभ्यामिर्प्रत्ययो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ तोक्किर्, पेंडिर्॥ एताभ्यामिति किम्। गोडियर्, पेंडितियर्॥

## संख्याया वर् ॥२४१॥

वृत्तिः॥ स्त्रीपुरुषवाचकेभ्यः संख्यावाचकेभ्यः वर् प्रत्ययो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ ईर्व्वर्, मूवर्, नाल्वर्, नूर्व्वर्, सासिर्व्वर्, कोंबदिंबर्, पदिंबर् इत्यादि॥

## तेभ्यः कळ् वा ॥२४२॥

वृत्तिः॥ तेभ्योऽरादिभ्यः परः कळ् प्रत्ययो वा भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ अत्तेयर्कळ्, अत्तेयर्; अत्तेदिर्कळ्, अत्तेदिर्; अत्तेविर्कळ्, अत्तेविर्; तंदेयर्कळ्, तंदेयर्; तंदेदिर्कळ्, तंदेदिर्; तंदेविर्कळ्, तंदेविर्; मूवर्कळ्, मूवर्; नाल्वर्कळ्, नाल्वर्॥ तेभ्य इति किम्। तायगळ्, तंदेगळ्॥

## संस्कृतादिर् च ॥२४३॥

वृत्तिः॥ अरादिप्रत्ययान्तेभ्यः संस्कृतशब्देभ्यः कळ् प्रत्यय

इर् प्रत्ययश्च वा भवत्यनेकत्वे सुपि परे ॥
प्रयोगः ॥ स्त्रीयर्क्कुक्, स्त्रीयरिर्; स्त्रीयर्; पुरुषर्क्कुक्, पुरुषरिर्, पुरुषर्; पंडितर्क्कुक्, पंडितरिर्, पंडितर् ॥

गळ्वादेः ॥244॥

वृत्तिः ॥ अरादिप्रत्ययान्तादद्वादेर्गणात् परो गळ् प्रत्ययो वा भवत्यनेकत्वे सुपि परे ॥
प्रयोगः ॥ अवर्गळ्, अवर्; इवंदिर्गळ्, इवंदिर्; आकेविर्गळ्, आकेविर्; ईकेविर्गळ्, ईकेविर् ॥

निनो विशेषणस्य कय्किरैकानेकत्वे सुपः ॥245॥

वृत्तिः ॥ निनो विशेषणवाच्कं यच्छब्दरूपं तत्संबंधिन एकत्वानेकत्वयोर्विहितस्य सुपो यथाक्रमं कय्, किर् इत्येतावागमौ वा भवतः ॥
प्रयोगः ॥ नीं पंडितनय्, नीं पंडितं; नींजाणनय्, नींजाणं; नींगळ् पंडितरिर्, नींगळ् पंडितर्; नींगळ् जाणरिर्, नींगळ् जाणर् ॥ निन इति किम् । तां जाणं, तां जाणर् ॥ विशेषणग्रहणं निनो माभूदिति ॥

ओनः केन्केव् ॥246॥

वृत्तिः ॥ ओनो विशेषणवाच्कं यच्छब्दरूपं तत्संबंधिन एकत्वानेकत्वयोर्विहितस्य सुपो यथाक्रमं केन्, केव् इत्येतावागमौ वा भवतः ॥
प्रयोगः ॥ आं पंडितनें, आं पंडितं; आं पंडितरेव्, आं पंडितर् ॥

श्लुबव्ययस्य ॥247॥

वृत्तिः ॥ वेति निवृत्तं । अव्ययाद् विहितस्य सुपः श्लुब् भवति शकारस्सर्वादेशार्थः ॥
प्रयोगः ॥ अरमे कंडं, अरमे इर्द्दं, अरमे अरसं, निन्नेरं नुडिदं, निन्नेरं कोंदं ॥ अव्ययस्येति किम् । सुररं, सुररिं, सुरर्गे ॥
व्याख्या ॥ अरमे ईर्द्दं, अरमे अरसं इत्यत्र निपाताः (44) इति प्रकृतिभावः ॥

वृत्तेः ॥248॥

वृत्तिः ॥ वृत्त्यन्तर्भूतस्य सुपः श्लुब् भवति ॥
प्रयोगः ॥ बंडनुण्बुदु– बंडुणि, मीनं कोल्वं – मींगुलि, कल्लं कुट्टुवं – कल्कुटिगं, मणियं माडुवं– मणिगारं, कालूरोळ् पुट्टिदं – कालुरिचं, छुंकदोळ् नियुक्तं – छुंकिगं, अरसिन मगळ्– अरमगळ्, सूक्तियर केरि– सूक्तेगेरि, मनदिं मुट्टिदं– मनमुट्टिदं ॥ वृत्तेरिति किम् । जनंगळिं, वनंगळिं ॥

व्याख्या ॥ ....॥ बंडुणि, मींगुलि, कल्कुडिगमित्यादौ कृति इरुणः कर्मणि (546), कोल उद्ध्रस्वश्च (547), कुट्टो रिगो द्व लुप् च (548) इति सुब् निमित्तक एव प्रत्ययः॥ तद्धितसमासयोस्तु स्फुट एवेति॥

न वोल्वोलि ॥249॥

वृत्तिः॥ अकारान्ताच्छब्दात् परस्य सुपः श्लुब् न भवति वोल् प्रत्यये, वोल् प्रत्यये च परे॥

प्रयोगः॥ इंद्रनवोल्, इंद्रनवोल्; चंद्रनवोल्, चंद्रनवोल्॥ वोल्-वोलीति किम्। इंद्रबोल्, चंद्रबोल्॥

व्याख्या॥ तस्य तुल्ये वोल्वोलौ (428) इति षष्ठ्यन्तादेतौ प्रत्ययौ विधास्येते।

अनतो वा ॥250॥

वृत्तिः॥ अनकारान्ताच्छब्दात् परस्य सुपः श्लुब् वा न भवति वोल् प्रत्यये वोल् प्रत्यये च परे॥

प्रयोगः॥ हरियवोल्, हरिवोल्; हरियवोल्, हरिवोल्; विधुववोल्, विधुवोल्; विधुववोल्, विधुवोल्; पितृववोल्, पितृवोल्; पितृववोल्, पितृवोल्॥

मः ॥251॥

वृत्तिः॥ अनकारान्ताच्छब्दात् परस्य मकारात्मकस्य सुपः श्लुब् भवति॥

प्रयोगः॥ महाज्या, पुण्यस्त्रि, नदि, वधु, गौ, नौ, पोन्, मण्, कल्, मरळ्, कोळंगाळ्, मावंदिर्, अत्तेयर्॥ अनत इति किम्। घटं, पटं, स्तंभं, कुंभं॥ म इति किम्। गिरियं, नदियं, अरलं, मरुळं॥

अेच् चामन्त्रणे ॥252॥

वृत्तिः॥ आमन्त्रणे विहितस्य मः श्लुप् अेदादेशश्च भवति॥ (228)

प्रयोगः॥ देव बिन्नपं, देवने बिन्नपं; अरसकेळ्, अरसनेकेळ्; ओलेवधु, ओलेवधुवे; गुरुगळ्, गुरुगळे; मावंदिर्, मावंदिरे॥

वैरोनेकत्वेऽवुकक्कुपः ॥253॥

वृत्तिः॥ अनेकत्वे विहितस्य मः इर इत्यादेशो वा भवत्यामन्त्रण विषये। न वुकक्कुभ्यां परस्य॥

प्रयोगः॥ बुधरिर, बुधर्; लतेगळिर, लतेगळ्; मावंदिरिर, मावंदिर्; अत्तेयिरिर, अत्तेयिर्; पंडितर्कळिर, पंडितर्कळ्॥ अवुकक्कुप इति किम्। इनियवु, इनियवे; नाळ्कळ्, नाळ्कळे॥

व्याख्या॥ (234), (233)

दीर्घः ॥254॥

वृत्तिः॥ अत्र दीर्घश्रुत्या स्वरस्येत्येतत् पदमुपतिष्ठते। तेन च मइत्यनुवर्तमानं विशिष्यते। स्वरान्तस्य मकारात्मकस्य सुबन्तस्य दीर्घादेशो वा भवत्यामन्त्रणविषये॥

प्रयोगः॥ देवा बिन्नपं, देव बिन्नपं; देवने बिन्नपं, देवने बिन्नपं; देवरे बिन्नपं, देवरे बिन्नपं; देवर्क्कळे बिन्नपं, देवर्क्कळे बिन्नपं; देवरिरा बिन्नपं, देवरिर बिन्नपं; देवर्क्कळिरा बिन्नपं, देवर्क्कळिर बिन्नपं॥ स्वरस्येति किम्। देवर्क्कळिं, गुरुगळ्पेळिं॥

अदः ॥255॥

वृत्तिः॥ अदित्येतत् सुबन्तस्य दीर्घादेशो वा भवति॥

प्रयोगः॥ जिनना, जिनन; गुरुगळा, गुरुगळ; गंगेया, गंगेय; वधुवा, वधुव॥

अमो नः ॥256॥

27.3.93 8.30 AM

वृत्तिः॥ नकारान्तस्य अमन्तस्य दीर्घादेशो वा भवति॥

प्रयोगः॥ कल्लानेरिदम्, कल्लनेरिदं; बिल्लानेरिसिदं, बिल्लनेरिसिदं; पालानीं टिदं, पालनीं टिदं॥.... अम इति किम्। देवनिं, जिननीतं॥ न इति किम्। देवनं कंडं, कंडं देवनं॥

अतो मग् गेद्दिरि ॥257॥

वृत्तिः॥ वेति निवृत्तम्। अकारान्तस्य शब्दस्य मगागमो भवति गेति दिरि च परे॥

प्रयोगः॥ अक्कंगे, अण्णंगे, तम्मंगे, भावंगे, मगंगे, अक्कंदिर्, अण्णंदिर्, मावंदिर्, भावंदिर्॥ अत इति किम्। अत्तेगे, सोसेगे, अत्तेदिर्, सोसेदिर्॥ गेद्दिरीति किम्। पंडितर्, मंडितर्, पेंडर्॥ (239)

गळि ॥258॥

वृत्तिः॥ अकारान्तस्य शब्दस्य मगागमो भवति गळ्प्रत्यये परे॥

प्रयोगः॥ अक्कंगळ्, अम्मंगळ्, मावंगळ्, भावंगळ्॥ योगविभाग अर्थः॥

नप्यमि च बहुलम् ॥259॥

वृत्तिः॥ अकारान्तस्य शब्दस्य मगागमो बहुलं भवति गळ्प्रत्यये अमि च परे नपुंसकलिङ्गविषये॥

प्रयोगः॥ बेट्टमं, घट्टमं, सालमं, सोलमं॥ क्वचिद् विकल्पः। कोळंगळ्, कोळगळ्; मरंगळ्, मरगळ्॥ संस्कृतेषु नित्यं। फलंगळ्, जलंगळ्, जनंगळ्; फलमं, जलमं, जनमं॥ क्वचिदन्यदपि भवति। नेलनं, पोलनं॥ क्वचिदन्यत्रापि। वृक्षमे, प्लक्षमे॥

नक् स्वरे ॥२६०॥

वृत्तिः॥ नपीति निवृत्तमुत्तरत्र नब्ग्रहणात्। अकारान्तस्य शब्दस्य नगागमो भवति स्वरादौ सुपि परे॥

प्रयोगः॥ जिनने, जिननं, जिनानिं, जिननत्तणिं, जिनन, जिननोक्; अक्कने, अक्कनं, अक्कनिं, अक्कनत्तणिं, अक्कन, अक्कनोक्॥ स्वर इति किम्। अक्कं, अण्णं॥

दगिमादौ नपि ॥२६१॥

वृत्तिः॥ अकारान्तस्य शब्दस्य दगागमो भवति स्वरादाविमादौ सुपि परे नपुंसकलिङ्गविषये॥

प्रयोगः॥ फलदे, फलदिं, फलदत्तणिं, फलद, फलदोक्॥ इमादाविति किम्। फलमं॥ स्वरादाविति किम्। फलक्के॥

र्वीवोः किन् वा ॥२६२॥

वृत्तिः॥ ऋवर्ण उवर्ण औकार ओकारान्तानां शब्दानां किनागमो वा भवति इमादौ सुपि परे॥

प्रयोगः॥ पितृविनिं, पितृविं; गृविनिं, गृविं; मधुविंगे, मधुगे; पूविंगे, पूगे; ग्लौविन, ग्लौव; गोविनोक्, गोवोक्॥ र्वीवोरिति किम्। तंदेयिं, तंदेगे; मुनियिं, मुनिगे॥

पगलिरुकः ॥२६३॥

वृत्तिः॥ पगल्, इरुक् इत्येतयोः शब्दयोः किनागमो वा भवति इमादौ सुपि परे॥

प्रयोगः॥ पगलिनिं, पगलिं; इरुकिनिं, इरुकिं; पगलिंगे, पगल्गे; इरुकिंगे, इरुक्गे॥

आगकीगको र्नित्यम् ॥२६४॥

वृत्तिः॥ आगक्, ईगक् इत्येतयोर्नित्यं किनागमो भवति इमादौ सुपि परे॥

प्रयोगः॥ आगकिनिं, ईगकिनिं; आगकिंगे, ईगकिंगे॥

कण् दिक्शब्दस्य ॥२६५॥

वृत्तिः॥ दिग्वाचकानां शब्दानां कणागमो भवति इमादौ सुपि परे॥

प्रयोगः॥ मूडणिं, मूडण्गे; तेंकणिं, तेंकण्गे; पडुवणिं, पडुवण्गे; बडगणिं, बडगण्गे; अत्तणिं, अत्तण्गे; इत्तणिं, इत्तण्गे; नडुवणिं, नडुवण्गे; कडेयणिं, कडेयण्गे॥

कृतोऽरु रुतः ॥२६६॥

वृत्तिः॥ कृत्प्रत्ययान्तानामुकारान्तानां शब्दानां अरुादेशो भवति इमादौ सुपि परे॥

प्रयोगः॥ माक्पुदरिं, माक्पुदक्कें; माड्कुदरिं, माड्कुदक्कें॥
उत इति किम्। ओडुकुकिथिं, बंडुणिथिं॥ कृत इति किम्।
मद्दिनिं, मद्दिंगे; बिक्पिनिं, बिक्पिंगे॥
व्याख्या॥ अत्र हि शब्दस्वरूपमेव विशेष्यं। कृत इत्युत इति-चोभयमपि विशेषणमेव नान्यतरदपि विशेष्यमित्युभयत्रापि तदन्तलाभ इति मत्वाह कृदन्तानामुकारान्तानामिति॥ माक्पुदरिं, माडुकरण इत्यस्माद्धातोः रच् कर्तृकर्मणोः (543) इति कर्तर्यचि (447) इति भाविकालो वा सति वो वा (458) इति सति कालो वा वप्रत्यये रुडोर्दो रकं व्यञ्जने (82) इति डुशब्दस्य ककारादेशो आदिष्टाद् रकः (514) इति वकारस्य पकारादेशः। अचः (455) इत्यच उद्वादेशे च सति माक्पुदु इति कृदन्तत्वमुदन्तत्वं च भवति। ततो धवलिङ्गं (8) इति लिङ्गसंज्ञायां हेतुकर्तृकरणेत्थंभूतलक्षणे (209) इति कर्तरी मिकृतोरुरुत इत्यर्वादेशे माक्पुदरिं इति सिद्ध्यति॥ कुर्वता करिष्यतावेत्यर्थः॥
एवमुत्तरत्रापि यथायथं द्रष्टव्यम्॥

भावे कुदोः ॥267॥

वृत्तिः॥ भावे विहितो यो कुदुस्तदन्तस्य शब्दस्यारुरादेशो भवति इमादौ कुपि परे॥
प्रयोगः॥ बप्पुदरिं, बप्पुदक्कें; पोपुदरिं, पोपुदक्कें॥ सिद्धे सत्यारम्भो नियमाय। यदि भाव वाच्चिनामुतामरुर्भवति तदा कुदोरेवेति। तेनेह न भवति। कापिनिं, कापिंगे; पसिविनिं, पसिविंगे; तिनिसिनिं, तिनिसिंगे॥
व्याख्या॥ - -॥ पसिविनिं, पसिविंगे, पस्यादेर्वुः (566)॥ तिनिसिनिं, तिनिसिंगे, इस्तुप्तिनः (578)॥ सर्वत्रोक्त निमित्तेपि किनेव॥

संख्या परिमाण गुणोक्तेः ॥268॥

वृत्तिः॥ संख्यादिवाच्चिनामुकारान्तानां शब्दानामरुरादेशो भवति इमादौ कुपि परे॥
प्रयोगः॥ पत्तरिं, पत्तक्कें; नूररिं, नूरक्कें; अनितरिं, अनितक्कें; इनितरिं, इनितक्कें; बिळिदरिं, बिळिदक्कें; करिदरिं, करिदक्कें॥

अद्वादेः कित् ॥269॥

वृत्तिः॥ उदन्तानामद्वादीनामरुरादेशो भवति स च किद्वद्भवति इमादौ कुपि परे॥
प्रयोगः॥ अदरिं, अदक्कें; इदरिं, इदक्कें; आवुदरिं, आवुदक्कें;

ओतरिं, ओतक्कें ॥ किद्ग्रहणं सर्वादेश निवृत्त्यर्थम् ॥

वोः ॥ 270॥

वृत्तिः ॥ कुप्रत्ययान्तस्य शब्दस्य अरुरादेशो भवति इमादौ सुपि परे ॥
प्रयोगः ॥ ओल्लवरिं, ओल्लवक्कें, ओल्लवरु, ओल्लवरोळ् ॥

वात्तणिमो देगदम्कौ ॥ 271 ॥

वृत्तिः ॥ लिङ्गात्परस्यात्तणिमो देक् दम्क इत्येतावागमौ वा भवतः ॥
प्रयोगः ॥ फलदत्तणिंदे, फलदत्तणिंदं, फलदत्तणिं; गिरियत्तणिंदे, गिरियत्तणिंदं, गिरियत्तणिं ॥

इमः ॥ 272॥

वृत्तिः ॥ लिङ्गात्परस्येमो देगदम्कौ वा भवतः ॥
प्रयोगः ॥ फलदिंदे, फलदिंदं, फलदिं; पूविंदे, पूविंदं, पूविं; मधुविनिंदे, मधुविनिंदं, मधुविनिं ॥ योगविभाग उत्तरार्थः ॥

अश्चातो नपि ॥ 273॥

वृत्तिः ॥ अकारान्ताच्छब्दात्परस्य इमओशादेशो वा भवति । चकाराद् देगदम्कौ च भवतो नपुंसकलिङ्गविषये ॥
प्रयोगः ॥ फलदे, फलदिंदे, फलदिंदं, फलदिं; मरदे, मरदिंदे, मरदिंदं, मरदिं ॥ अत इति किम् । नदियिंदे, नदियिंदं, नदियिं ॥ नपीति किम् । जिननिंदे, जिननिंदं, जिननिं ॥

गेतः क आदेः ॥ 274॥

वृत्तिः ॥ वेति निवृत्तम् । अकारान्ताच्छब्दात्परस्य गेतः प्रथमावयवस्य ककारादेशो भवति नपुंसकलिङ्गविषये ॥
प्रयोगः ॥ नेलके, पोलके, फलके, पुष्पके ॥ अत इति किम् । गिरिगे, गिडुगे ॥ नपीति किम् । जिनंगे, शिवंगे ॥

रोर्विकृतात् ॥ 275॥ 3.4.93 / 8.2.4P

वृत्तिः ॥ विकृतो यो रु शब्दस्तस्मादुत्तरस्य गेतः प्रथमावयवस्य ककारादेशो भवति ॥
प्रयोगः ॥ मारुपुदक्कें, बेरुपुदक्कें, अवक्कें, इवक्कें, ओतक्कें, आवुदक्कें ॥ रोरिति किम् । मूडणगे, पडुवणगे ॥ विकृतादिति किम् । करुगे, तुरुगे । ओके इत्यत्र तु केत्येच्च (177) इति निर्देशादेव भवति ॥

कुग् वा ॥ 276॥

वृत्तिः ॥ अकारान्ताच्छब्दादुत्तरस्य गेतः प्रथमावयवस्य कुगागमो वा भवति नपुंसकलिङ्गविषये । उकार उच्चारणार्थः ॥
प्रयोगः ॥ मरक्के, मरके; फलक्के, फलके; पुष्पक्के, पुष्पके ॥

ओकश्शल्लिः ॥२७७॥

वृत्तिः॥ लिङ्गात्परस्य ओकः शल्लिरादेशो वा भवति ॥
प्रयोगः॥ मनेयल्लि, मनेयोक्; गृहदल्लि, गृहदोक्; कल्लल्लि, कल्लोक्; कुरुकुगळल्लि, कुरुकुगळोक्; केशंगळल्लि, केशंगळोक्॥

श्लुबुतः कालार्थात् ॥२७८॥

वृत्तिः॥ उकारान्तात् कालवाचिनः परस्य ओकः श्लुब् वा भवति॥
प्रयोगः॥ अंदु, अंदिनोक्, अंदिनल्लि; इंदु, इंदिनोक्, इंदिनल्लि॥
उत इति किम्। संजेयोक्, संजेयल्लि; बय्गेयोक्, बय्गेयल्लि॥
कालार्थादिति किम्। मडुविनोक्, मडुविनल्लि॥

अमः ॥२७९॥

वृत्तिः॥ उकारान्तात् कालवाचिनः परस्यामः श्लुब् नित्यं भवति॥
प्रयोगः॥ अंदुकळेदं, इंदुकळेदं॥ योग विभागो नित्यार्थः॥

ओक् मश्चातो दिगर्थाच्छ्लल् च ॥२८०॥

वृत्तिः॥ अकारान्ताद् दिग्वाचिनः परस्य ओको मोऽमश्च शलादेशो भवति। चकाराच्छ्लुप् च॥
प्रयोगः॥ मूडल् पूर्यनुदयिसिदं, मूड पूर्यनुदयिसिदं। एवं मेरुविं तेंकल् भरतक्षेत्रं, मेरुविंतेंक भरतक्षेत्रं; मूडल् नोडिदं, मूडनोडिदं — प्राचीमपश्यदित्यर्थः॥ बडगलोप्पिदुदु, बडगोप्पिदुदु — उदीचीजयतीत्यर्थः॥ अत्तलिर्दं, अत्तिर्दं — तस्यां दिश्यतिष्ठदित्यर्थः॥ अत्तल् कंडं, अत्तकंडं — तां दिशमपश्यदित्यर्थः॥ अत्तल् नडेये पट्टुदु; अत्तनडेयेपट्टुदु — सा दिग्गम्यत इत्यर्थः॥ अत इति किम्। मूलेयोक्, मूलेयं, मूले॥
दिगर्थादिति किम्। फलदोक्, फलमं, फलं॥

ओश्चोतः ॥२८१॥

वृत्तिः॥ उकारान्ताद् दिग्वाचिनः परस्य ओकः मः अमश्च ओशादेशो वा भवति। पक्षे यथा योगं भवति॥
प्रयोगः॥ ओकगे, ओकगिनोक्, ओकगिनल्लि; ओक्को, ओक्कां; ओक्को, ओक्कु॥

तन्निनेनो मनेकत्वे ॥२८२॥

वृत्तिः॥ तन्, निन्, एन् इत्येतेषां मकारादेशो भवत्यनेकत्वे सुपि परे॥
प्रयोगः॥ ताम्, नीम्, आम्, तमगे, निमगे, आमगे॥ अनेकत्व इति किम्।
तान्; नीन्, आन्॥ (२४७), (२५१), (२४४)

मो मक् स्वरे ॥२८३॥

वृत्तिः॥ मकारान्तानां तन्, निन्, ओन् इत्येतेषां मगागमो भवति स्वरादौ सुपि परे॥
प्रयोगः॥ तम्मं, निम्मं, ओम्मं; तम्मिं, निम्मिं, ओम्मिं, तम्म, निम्म, ओम्म; तम्मोक्, निम्मोक्, ओम्मोक्॥ म इति किम्। तन्नं, निन्नं, ओन्नं॥ स्वर इति किम्। तमगे, निमगे, ओमगे॥ (53)

अक् तुन्तुगेति ॥२८४॥

वृत्तिः॥ तन्, निन्, ओन् इत्येतेषामगागमो भवति तुन्तुगेत्सु परेषु॥
प्रयोगः॥ तनतु, तनन्तु; निनतु, निनन्तु; ओनतु, ओनन्तु; तनगे, तमगे; निनगे, निमगे; ओनगे, ओमगे॥

वादस्तुन्तू ॥२८५॥

वृत्तिः॥ तन्, निन्, ओन् इत्येतेभ्यः परस्य अदस्तुन्तू इत्येतावादेशौ वा भवतः॥
प्रयोगः॥ तनतु, तनन्तु, तन्न; निनतु, निनन्तु, निन्न; ओनतु, ओनन्तु, ओन्न॥ एवं बहुत्वेपि। वा द्वित्वमपि। तन्नदु, तम्मदु; निन्नदु, निम्मदु; ओन्नदु, ओम्मदु॥

संख्यायामुतुश्च ॥२८६॥

वृत्तिः॥ तन्, निन्, ओन् इत्येतेभ्यः परस्याद उतुरादेशो वा भवति संख्यावाचिनि परतः॥
प्रयोगः॥ तम्मुतय्वर्, निम्मुतेण्बर्, ओम्मुतोंबदिंबर्, तम्मुतय्दु मनेगळ्, निम्मुतारु गिरिगळ्, ओम्मुतेंटु मक्कळ्॥

मि दीर्घः ॥२८७॥

वृत्तिः॥ तन्, निन् इत्येतयोर्दीर्घादेशो भवति मकारे सुपि परे॥
प्रयोगः॥ तान्, ताम्; नीन्, नीम्॥ (282), (251)

आदेनः ॥२८८॥

वृत्तिः॥ दीर्घ इति वर्तते। ओन् इत्येतस्य दीर्घ आकारो भवति मकारे सुपि परे।
प्रयोगः॥ आन्, आम्॥ दीर्घ ग्रहणमन्त्यादेश निवृत्यर्थम्॥ (282)

उम् समुच्चये परोनदः पदात् ॥२८९॥

वृत्तिः॥ अद् व्यतिरिक्तात् पदात् पर उम् प्रयुज्यते समुच्चये गम्यमाने॥
प्रयोगः॥ हरियुं, हरनुं, जिनेंद्ररुं, गणेंद्ररुं, केवलिगळुं, श्रुतकेवलिगळुं; फलदिंदमुं, पुष्पदिंदमुं, आतनिंदमुं, आकेयिंदमुं; आडुं, एडुं; माडियुं, कूडियुं॥ अनद इति किम्। आतन, आकेय, अदर॥ पदादिति प्रकृतेर्माभूत्॥ पर इति पूर्वं माभूत्॥

ओङ्गेतोरम् च ॥२९०॥

वृत्तिः॥ ओकन्ताद् गेदन्ताच्च पदात्पर उम् अम् च भवतः समुच्चये गम्यमाने॥
प्रयोगः॥ अवनोकुं, अवनोकं; आकेयोकुं, आकेयोकं; अदरोकुं, अदरोकं; आतंगेयुं, आतंगं; आकेगेयुं, आकेगं; अदक्केयुं, अदक्कं॥

अमः प्रागमः ॥२९१॥

वृत्तिः॥ अमन्तस्य पदस्य समुच्चय विषये उम् भवति। स चामः प्राग्भवति॥
प्रयोगः॥ अवनुमं, अवरुमं; आकेयुमं, आकेगकुमं; फलमुमं, पुष्पमुमं, अवरुमन् अंतकन् ओम्मैये सविनोडिदं॥ प्राग्ग्रहणं परतो निवृत्त्यर्थम्। अमो द्विरुपादानम् अमन्तादेव मा भूदिति॥
इति श्री भट्टाकलंक देव विरचितायां भाषामंजरी समाख्यायाँ शब्दानुशासन वृत्तौ द्वितीयः पादः॥

समर्थः पदविधिः ॥२९२॥

वृत्तिः॥ परिभाषेयं॥ पदानां यो विधिः स समर्थ एव वेदितव्यः। सामर्थ्यं च द्वेधा। एकार्थीभावलक्षणं व्यपेक्षा लक्षणं चेति। तत्राद्यं समासे। द्वितीयं तु वाक्ये॥
प्रयोगः॥ अमकृतिङा (२९८) वज्रमंकोंड्य्–वज्रंगोंड्य्॥ समर्थ इति किम्। नोडु वज्रमं, कोंड्य् चक्रमं॥ इम् करणे (300) नीरिं तोकेदं – नीर्दोक्केदं॥ समर्थ इति किम्। तोक्केदं नीरिं, तोकेदनेलेयं॥ गेत्तदर्थेनः (302) तेगेर्ं मरं–तेम्मरं॥ इह न भवति। मरं तेगेर्ं, बण्णं मनेगे॥ भीत्यर्थेनात्तणिं (303) पुलियत्तणिं दक्कु– पुलियक्कु॥ इह न भवति। बीळ्दुदु पल् पुलियत्तणिं, अक्कुदेवदत्तंगे॥ आद् (304) मरदकोंबु– मरगोंबु॥ इह न भवति। पेणे मरद, कोंबु गोविन॥ ओक् साधु-निपुणार्थेन (305) जगक दोक्जाणं– जगकजाणं॥ इह न भवति। बयदं जगकदोक्, जाणं नोटदोक्॥ अंशिना भिन्नेन (306) काल मुंदु – मुंगाल्॥ इह न भवति। बेरल् काल, मुंदु मनेय॥ संख्या समाहारे (307) मूरु लोकं – मूलोकं॥ इह न भवति। कालंगक् मूरु, लोकंगळीरेकु॥ विशेषणमेकार्थेन (309) बिळिदु तावरे – बेळ्दावरे॥ इह न भवति। पाल् बिळिदु, तावरे योप्पिदत्तु॥ द्वन्द्वः साहित्ये (314) अक्किगिळिगळ्॥ इह न भवति। पाडिदुदकि,

गिकियोडिदुदु ॥ इरुणः कर्मणि (546) कंपनुण्बुदु – कंपुणि ॥ इह न भवति। अरियदु कडंडुरु कंपं, उण्बुदु जनं कर्म्म फलवं ॥ कुड्डोरि- गोदुलुप्-च (548) कल्लं कुड्डुवं – कल्कुड्डिगं ॥ इह न भवति। कडं कल्लं, कुड्डुवं भत्तमं ॥ नेत्यघेत्रोः (408) जोयि समनोदुवं– जोयिसिगं ॥ इह न भवति। बल्लं जोयिसां, ओदुवं वेदमं ॥ दिक्छ- बद्यादणः (421) तेंकल् पुट्टिदं– तेंकणं ॥ इह न भवति। भरतक्षेत्रं, मेरुविं तेंकल्, पुट्टिदं कृष्णं गोकुलदोळ् ॥ ओळ् साधु निपुणार्थेन (305) तायोळ् साधु – तायसाधु ॥ इह न भवति। आतनताय्, साधु वीतं ॥ सहार्थेनाप्रधाने (311) पुत्रनिं कूडि – पुत्रंगूडि ॥ इह न भवति ॥ कंडं पुत्रनं, कूडि मोहदिं ॥

सुप्सुपा समासो बहुलम् ॥ 293॥

वृत्तिः॥ अधिकारोऽयम्। सुबन्तं सुबन्तेन सह बहुलं समस्यत इत्यधिकृतं वेदितव्यम्। वक्ष्यति विशेषणमेकार्थेन (309) ॥

प्रयोगः॥ बेळ्दावरे, कन्नेयदिल् ॥ सुबिति किम्। अडं बाणसिगं॥ सुपेति किम्। गाय कर्प्पाडिदर् ॥ बहुलं ग्रहणं वाक्यस्यापि साधुत्वार्थं॥ विधिश्चार्थं। बेगं बंदं – बेगबंदं; तिब्बं नुडिदं – तिब्बनुडिदं ॥

कृत्संख्याऽद्रादि गुणोक्तिस्संस्कृतेन-च ॥294॥

वृत्तिः॥ कृदन्तं संख्यावाचकमद्रादिकं गुणवचनं-च सुबन्तं संस्कृतेना संस्कृतेन च सुबन्तेन सह समस्यत इत्यप्यधिकृतं वेदितव्यम् ॥

प्रयोगः॥ बीसुव-चामरं, पोडेवभेरि, ओरुव जव्वनं, मुक्तेरळ् दं तियरिवर्, नाल् भुजनीतं, नाल्वट्टे, आतुरंगं, अेल्लाजगंगळ्, ईमने, पिरिय गुरुगळ्, किरियंगने ॥ कृदादीनां संस्कृतेन सह समास विधानादन्येषां तेन सह समासो न भवतीति विज्ञायते ॥

तच्च बिरुदावळ्याम् ॥295॥

वृत्तिः॥ संस्कृतमसंस्कृतं-च सुबन्तं संस्कृतेना संस्कृतेन-च सुबन्तेन सह समस्यते बिरुदावळ्यां विषये इत्यप्यधिकृतं वेदितव्यम् ॥

प्रयोगः॥ नरलोक-दल्लनं, करिवेंटेगारं, रायकोलाहलं, जवादिकोलाहलं, गेणंक-चक्रेश्वरं, राकुत्तरायं ॥ बिरुदावळि ग्रहणमन्यत्र संस्कृतासंस्कृतयोस्समास निरासार्थम् ॥

कडुरागादयः ॥296॥

वृत्तिः॥ कडुरागादयश्शब्दाः कृत समासाः साधवो वेदितव्याः ॥

प्रयोगः॥ कडुरागं, मोगरागं, गुणकरु, कूरसि, मार्बलं, पेर्बलं,

आळ्विजनं, तुरगदळं, मंगळारति, मंगळपसदनं, पँचसरं, पादरक्के, परबोम्मं, दानसाले, बाहुबल्के, पादसंकले, गोडुरं, सिरिरामं, तिङ्गांतकं, पयगति, जवदंडं, पँडुवातं, गावरसं, पशुपति, बोँमांडं, अरसुगुणं, अक्करमाले, माकाळि, मादाणि, मादेवं, माशौर्यधनं इतिकुडरगादि- राकृतिगणः ॥

सूक्तं पूर्वम् ॥२९७॥

10/4/93
7.45

वृत्तिः ॥ समासविधौ यत्प्रथमानिर्दिष्टं तत्पूर्वं प्रयोक्तव्यम् ॥
प्रयोगः ॥ अमकृत्तिङा (२९८) वज्रंगोंड्य् । इम् करणे (३००) कोडलिगडिदं । गेत्तदर्थैन (३०२) उंगुरचिन्नं ॥ सूक्तमिति किम् । अमकृत्तिङा (२९८) इत्यादौ तिङेत्यादिष्टोक्तादेर्माभूत् । वाक्यवदनियमेन पौर्वापर्ये प्राप्तौ नियमार्थो योगः ॥

अमकृत्तिङा ॥२९८॥

वृत्तिः ॥ कृदन्तव्यतिरिक्तममन्तं सुबन्तं तिङन्तेनोत्तरपदेन सह बहुळं समस्यते ॥
प्रयोगः ॥ पालं कुडिदें – पाल्गुडिदें, बक्कपमं पिडिद्य् – बक्कपं बिडिद्य्, नीरं कुडिगुं – नीर्गुडिगुं, संतसमं कुडुगे – संतसंगुडुगे ॥ अकृदिति किम् । माडिदनं कंड्य्, पाडिदनं पोगळ्दय् ॥ अमिति किम् । मरनिर्द्दुदु, कण्णिंकंड्य् ॥ तिङेति किम् । मरनं कोडलियिं कडिद्य् ॥

कृता ॥२९९॥

वृत्तिः ॥ कृदन्तव्यतिरिक्तममन्तं सुबन्तं कृदन्तेनोत्तरपदेन सह बहुळं समस्यते ॥
प्रयोगः ॥ मरनं कडिदनं – मरगडिदनं, कण्णं बिद्दनं – कण्बिद्दनं, बायं बिद्दुंगे – बायिबिद्दुंगे ॥

इम् करणे ॥३००॥

वृत्तिः ॥ करणेऽर्थे विहितो य इम् तदन्तं सुबन्तमुत्तरपदेन कृदन्तेन सह बहुळं समस्यते ॥
प्रयोगः ॥ कोडलियिं कडिदं – कोडलिगडिदं, कण्णिं कंडं – कण्गंडं, कुडुगोलिं कोय्दुं – कुडुगोल्गोय्दुं ॥ करण इति किम् । देवदत्तनिं काणल्पट्टुदु, यज्ञदत्तनिं पेळल्पट्टुदु ॥ इम् ग्रहणमुत्तरार्थम् ॥

सहार्थेन ॥३०१॥

वृत्तिः ॥ इमन्तं सुबन्तं सहार्थेनोत्तरपदेन सह बहुळं समस्यते ॥
प्रयोगः ॥ नीरिं कूडि – नीर्गूडि, मक्कळिं बेरसि – मक्कळ्बेरसि ॥
सहार्थेनेति किम् । बिज्जेयिं जसं, पणदिं कुलं ॥ इमिति किम् ।

देवदत्तगोऽन्ने ॥ बहुकाधिकारात् यद्भेदात् तद्वदाख्या (२१०) इत्यनेन विहितभन्तं प्रकारवाच्युत्तरपदेनापि समस्यते। कणिं कुरुडं- कणुरुडं, कालिं कुंटं- काल्गुंटं ॥

गेत् तदर्थेन ॥302॥

वृत्तिः॥ गेदन्तं सुबन्तं तदर्थेनोत्तरपदेन सह बहुकं समस्यते ॥
प्रयोगः॥ तेर्गो मरं -- तेर्म्मरं, उंगुरक्के चिन्नं- उंगुरचिन्नं ॥ तदर्थेनेति किम्। याज्ञिकं गिष्टं स्वर्गं, ब्राह्मणंगे गोवं कोट्टं ॥

भीत्यर्थेनात्तणिम् ॥303॥

वृत्तिः॥ अत्तणिमन्तं सुबन्तं भीत्यर्थेनोत्तरपदेन सह बहुकं समस्यते ॥
प्रयोगः॥ पुलियत्तणिंदक्कु- पुलियक्कु, कक्करत्तणिं पेकरु-कक्कवेकरु, मरुकत्तणिं दकरु- मरुक्करु ॥ भीत्यर्थेनेति किम्। ऊरत्तणिं बंदं, मनेयत्तणिं पोदं ॥ अत्तणिमिति किम्। तुरुगक्कुगक्कु पुलियत्तणिं॥

अद् ॥304॥

वृत्तिः॥ अदन्तं सुबन्तं सुबन्तेनोत्तरपदेन सह बहुकं समस्यते ॥
प्रयोगः॥ मरद कोंबु- मरगोंबु, पक्किय गूडु- पक्किगूडु, अरसिन आळ्- अरसाळ्, आनेय मरि- आनेमरि ॥

ओक् साधुनिपुणार्थेन ॥305॥

वृत्तिः॥ ओकन्तं सुबन्तं साध्वर्थेन निपुणार्थेन चोत्तरपदेन सह बहुकं समस्यते॥
प्रयोगः॥ तायोक्कोक्किदं -तायोक्किदं, तंदेयोक्कोक्किदं- तंदेयोक्किदं, जूदिनोळ्जाणं - जूदुजाणं, बेहिनोळ्चदुरं- बेडुचदुरं ॥ साधुनिपुणार्थेनेति किम्। ओक्कोळेण्णे, पालोळ्मधुरं ॥ ओकिति किम्। कक्किंजाणं ॥

अंशिनाभिन्नेन ॥306॥

वृत्तिः॥ अंशवाचकं सुबन्तं अंशिवाचिनोत्तरपदेन सह बहुकं समस्यते, न चेत् सोंशि भिन्नः॥
प्रयोगः॥ कय्य मुंदु- मुंगय्, काल मुंदु -मुंगाल्, काल अडि-अंगाल्, कय्य अडि -अंगय्; काल मेगु- मेगाल् ॥ अंशिनेति किम्।
कय्यबेरलमुंदु, कालबेरल अडि ॥ अभिन्नेनेति किम्। मुंदुमनेगळ, पिंदुकाल्गळ।

संख्या समाहारे ॥307॥

वृत्तिः॥ संख्यावाचि सुबन्तं संख्येयेन सुबन्तेनोत्तरपदेन सह बहुकं समस्यते समाहारे गम्यमाने। समाहरणं समाहारः साहित्यं ॥
प्रयोगः॥ मूरु लोकंगळ समाहारं -मूलोकं। एवं नाल्मोगं, अय्गावुदं,

ओण्देले ॥ समाहारस्यैकत्वाद्देकवचनं ॥ संख्येति किम् । ओक्किदर् पार्व्वेर समाहारं ॥ समाहार इति किम् । मूरु लोकंगळ् ॥

इयुक्तं कृता तद्विधौ नित्यम् ॥ 308॥

वृत्तिः॥ कृद्विधौ सप्तमीनिर्दिष्टं सुबन्तं कृदन्तेनोत्तरपदेन सह नित्यं समस्यते ॥

प्रयोगः॥ कंपनुण्बुदु – कंपुणि, मीनं कोल्वं – मींगुलि, कल्लं कुट्टुवं – कल्कुटिगं ॥ इयुक्तमिति सर्वनिपातार्थं ॥ कृतेति किम् । मीनं बलेयिं कोल्वं ॥ तद्विधाविति किम् । पेंडातियं कंडं ॥ (546),(547)

विशेषणमेकार्थेन ॥309॥

वृत्तिः॥ विशेषणवाचि सुबन्तं समानाधिकरणेन विशेष्यवाचिनोत्तरपदेन सुबन्तेन सह बहुळं समस्यते । पूर्वोत्तरयो र्नित्यग्रहणादिह बाहुळको विधिरवसीयते ॥

प्रयोगः॥ बिक्किदु तावरे – बेक्दावरे, बट्टितु मोले – बट्टमोले, तोरितु मुडि – तोरमुडि, निडिदु कण् – निडुगण् ॥ विशेषणमिति किम् । तावरे बिक्किदु ॥ एकार्थेनेति किम् । पोके योळ् मीनगळ् ॥

अन्यार्थे बहुव्रीहि नित्यम् ॥310॥

वृत्तिः॥ विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेनोत्तरपदेन सह नित्यं समस्यते अन्यपदार्थे गम्यमाने । स समासो बहुव्रीहि संज्ञो भवति ॥

प्रयोगः॥ कोंकिदुदु बिल्लावंगातं – कुडुविल्लं, कडिदु च्यागमावंगातं – कडुच्यागि, निडिदु कण्णावं गातं – निडुगण्णं, जाल्कुतोळ्गळावं गातं – जाल्दोळं ॥ अन्यार्थ इति किम् । कडुच्यागं, कुडुविल् ॥ विशेषणमिति किम् । बिल् कोंकिदुदावंगे ॥ एकार्थेनेति किम् । आनेय कोंबीतंगे ॥ बहुव्रीहि प्रदेशा अब् बहुव्रीहेः (527) इत्येवमादयः ।

ओका ॥311॥

वृत्तिः॥ सुबन्तं पूर्वपदं ओकन्तेनोत्तरपदेन सह नित्यं समस्यते अन्यार्थे गम्यमाने । स समासो बहुव्रीहि संज्ञो भवति ॥

प्रयोगः॥ बांबोच्चं दलेयोकावंगातं – बांबोच्चदलेयं, बग्गदोवल् उडियोकावं गातं – बग्गदोवलुडियं, किच्चु कण्णोकावं गातं – किच्चुगण्णं ॥

मिथो ग्रहणे प्रहरणे च युद्धे सरूपम् ॥312॥

वृत्तिः॥ मिथः अन्योन्यं गृह्णन्ति यस्मिन् येन वान्योन्यं प्रहरन्ति

तत्र प्रवर्तमानं समानश्रुतिकं तत्रैव प्रवर्तमानेन सुबन्तेन सह नित्यं समस्यते अन्यार्थे युद्धे गम्यमाने । स समासो बहुव्रीहि संज्ञो भवति॥
प्रयोगः॥ हेल्लमं हेल्लमनोरोंदं पिडिकुदाव युद्धदोकदु–हेल्लाहेल्लि, कोलिं कोलिं पोरकुदाव युद्धदोकदु–कोलाकोलि॥ मिथ इति किम्। हेल्लमं हेल्लमं पिडिकुदु युद्धदोक्॥ ग्रहणे प्रहरणे–चेति किम्। हेल्लमं हेल्लमं मेट्टिमाक्रुप युद्धं॥ युद्ध इति किम्। कय्यं कय्यनोरोंदं पिडिदुमाक्रुप बिनदं॥ सरूपमिति किम्। कय्यं कालनोरोंदं पिडिदु माक्रुप युद्धं॥

वा वारार्थे संख्येये संख्यया संख्या ॥313॥

वृत्तिः॥ वार्थो विकल्पः संशयो वा॥ वार्थे वारार्थे–च गम्यमाने संख्यावाचि सुबन्तं संख्येयेवर्तमानेन संख्यावाचिनोत्तरपदेन सह नित्यं समस्यते॥
प्रयोगः॥ ओरडु मेण् मूरु मेण् — ओरकुमूरु, नाल्कुमेण् अय्दु मेण्– नाल्करदु, ओरडो मूरो– ओरकुमूरु, नाल्को अय्दो– नाल्कय्दु, ओरकुबारि अय्दु– ईरैदु, ओरकुबारि पत्तु इप्पत्तु॥
वावारार्थ इति किम्। ओरडुं मूरुं, ओरडे मूरे॥ संख्येय इति किम्। पान्बरन्नूरो अय्कत्तो॥ संख्ययेति किम्। आने ओरडो कल्लो॥ संख्येति किम्। कुदुरेयो पत्तनेयो॥

द्वन्द्वः साहित्ये ॥314॥

वृत्तिः॥ सुबन्तं सुबन्तेनोत्तरपदेन सह नित्यं समस्यते साहित्ये गम्यमाने। स समासो द्वन्द्व संज्ञो भवति॥
प्रयोगः॥ मरनुं गिडुवुं–मरगिडुगळ्, अक्कियुं गिक्कियुं–अक्किगिक्किगळ्, करियुं तुरगमुं–करितुरगंगळ्॥ साहित्य इति किम्। मरनुं गिडुवुं॥ द्वन्द्व प्रदेशाः परवद् द्वन्द्वः (॥2) इत्येवमादयः॥ (289)

समानामेकः ॥315॥

वृत्तिः॥ रूपतोऽर्थतो वा समानां शब्दानामेक एव शब्दोऽवशिष्यते साहित्ये गम्यमाने॥
प्रयोगः॥ अक्षमुं अक्षमुं– अक्षंगळ्, पादमुं पादमुं–पादंगळ्, माषमुं माषमुं–माषंगळ्, मडमुं मडमुं– मडंगळ्, जाणनुं–चदुरनुं –जाणर–चदुरमेण्, बिक्किदुं विशदमुं–बिक्कियतु विशदंगळ्मेण्॥ समानामिति किम्। मरगिडुगळ्, पुल्चोदरुगळ्॥

अक्षादिः ॥316॥

वृत्तिः॥ अक्षादिनान्येन वा सहवचने अक्षादिरेक एव शिष्यते॥

प्रयोगः॥ कुदुरेयुं आतनुं – अवर्, अदुं कुदुरेयुं – अवु, लतेयुं इकेयुं – इवर्, पूवुं उदुं – इवु॥ अद्यादिष्वेव पूर्वोत्तरयोस्सहवचने शब्द पर विप्रतिषेधादुत्तरस्यैव शेषः॥ आतनुं ईतनुं – इवर्, ईतनुं ऊतनुं – उवर्, आकेयुं ईकेयुं – इवर्॥ – (२४१)

तन्निनेन् ॥317॥

वृत्तिः॥ तनादिस्तनादिनान्येन वा सहवचने एक एव शिष्यते॥
प्रयोगः॥ जिनदत्तनुं – आं, यज्ञदत्तनुं नीनुं – नीं, विष्णुमित्रनुं तानुं – तां॥ अत्रापि पूर्वोक्तन्यायेनोत्तरस्यैव शेषः॥ तानुं नीनुं – नीं, नीनुं आनुं – आं॥

स्त्रीपुन्नप् ॥318॥

वृत्तिः॥ स्त्री पुज्जपां सहवचने स्त्री पुन्नबेक एव शिष्यते। शब्दपर- विप्रतिषेधादत्राप्युत्तरस्यैव शेषः॥
प्रयोगः॥ आकेयुं आतनुं – अवर्, आतनुं अदुवुं – अवु, अदुवुं आकेयुं – अवर्॥

तन्देस्ताया वा ॥319॥

वृत्तिः॥ ताय् शब्देन सहवचने तंदे शब्द एको वावाशिष्यते॥
प्रयोगः॥ तंदेयुं तायुं – तंदेगळ्, तंदेतायगळ्॥

एकवद् द्वन्द्वः ॥320॥

वृत्तिः॥ द्वन्द्व समास एकवद् वा भवति॥
प्रयोगः॥ मरगिडुगळ् – मरगिडु, अकिगिळि पुल्पोदरुगळ् – अकिगिळि- पुल्पोदरु, कावचंदिरर् – कावचंदिरं॥ 17.4.93 9.01 P.M.

जात्याख्यायामनेकवत् ॥321॥

वृत्तिः॥ एकमप्यनेकवद् वा भवति जात्याख्यायां विषये॥
प्रयोगः॥ कक्केकेदुदु – कक्केगळ्केडुवु, गोधियेट्टुदु – गोधियगळ्बेट्टुवु, धान्यंपेच्चितु – धान्यंगळ्पेच्चिदुवु॥ जात्याख्यायामिति किम्। देवदत्तं पुट्टिदं, यज्ञदत्तनुं॥

तिङ् तद्वाचि ॥322॥

वृत्तिः॥ जात्याख्यायां विषये तद्वाचि तिङन्तमनेकवद्वा भवति॥
प्रयोगः॥ आनेनुं किडुदु – आनेनुं किडुवु, कुदुरेबंदुदु – कुदुरेबंदुवु, ओक्कुतुपोदुदु – ओक्कुतुपोदुवु॥ तिङिति किम्। कुणिवुदं कुदुरेयं नोडिदं॥ तद्वाचीति किम्। देवदत्तं बंदं॥

अेन् ॥323॥

वृत्तिः॥ ओन् शब्द एकार्थोऽप्यनेकवद् वा भवति॥
प्रयोगः॥ ओं माडिदें, ओं माडिदेवु; ओन्न मने, ओम्म मने; ओन्न कुलं, ओम्म कुलं॥ व्यवस्थित विभाषा विज्ञानाद् यत्र संज्ञा शब्दैर्विशिष्यते तत्र न भवति। ओं देवदत्तं बंदें॥

पूजोपहासे ॥324॥

वृत्तिः॥ पूजायामुपहासे च विषये एकार्थोऽप्यनेकवद् वा भवति॥
प्रयोगः॥ पूजायाम्। ओम्म तंदे – ओम्म तंदेगळ्; ओम्म गुरु – ओम्म गुरुगळ्॥ उपहासे।

कं०॥ बडवादिररसकालो।
कनडेदपिरोऽनारु मिल्ल कडलेगकेन्निं॥
मुडियोळगोपडुव देगुल।
देडेयावुदु कुडदनिमगमीयेडरायते॥

प्रतिनिर्देश्यम् ॥325॥

वृत्तिः॥ प्रतिनिर्देश्यं विधेयम्। तद्वाचकमेकार्थमप्यनेकवद् वा भवति॥
प्रयोगः॥ ऐश्वर्यमेल्लमध्रुवं, अध्रुवं गळिति वा। बेरल् तोरिन्तु, तोरिदुविति वा। गुडि सुरक्, सुरक्गळिति वा॥

संख्येयमेकवद् ॥326॥

वृत्तिः॥ संख्याशब्दविशेष्यं संख्येयं। तदनेकार्थमप्येकवद् भवति वा॥
प्रयोगः॥ ईरेकु लोकंगळ्; लोकमिति वा; ओरडयदु, अयदुगळिति वा; ईरयदवस्थेगळ्, अवस्थे इति वा॥

अब् बहुव्रीहेः ॥327॥

वृत्तिः॥ वेति निवृत्तम्। बहुव्रीहि समासादप् प्रत्ययो भवति। पकारः 'अप्कात्' (194) इति विशेषणार्थः॥
प्रयोगः॥ अलर्गण्णं, पेरेनोसलं, कुडुविल्लं, नाल्दोळं, विडुगालं॥ बहुव्रीहेरिति किम्। अलर्गण्, पेरेनोसल्॥

अट् स्वरात् ॥328॥

वृत्तिः॥ स्वरान्ताद् बहुव्रीहि समासादट् प्रत्ययो भवति। टकारः 'अट् दाणान्चः' (182) इति विशेषणार्थः॥
प्रयोगः॥ पलगोर्देयं, निडुवणेयं, नुण्दोडेयं, बट्टवोलेयळ्, निडुजडेयळ्, पेरेवणेयळ्॥ स्वरादिति किम्। कुसिगोरलं, कुसिगोरलि॥

इश्चागादिभ्यः ॥329॥

वृत्तिः॥ चागाद्यन्ताद् बहुव्रीहि समासादि प्रत्ययो भवति॥

प्रयोगः॥ कडुचागि, कडुगोलसि, पुसिबादि, बल्कुज्जागि ॥ च्चागादिभ्य इति किम्। निडुवेन्नं, च्चेंबोन्नं ॥ च्चाग, केलस, बेशर, उज्जाग, बाडु, (बड) बत इति च्चागादिराकृतिगणः॥

इल्लाल्लुप् च ॥ 330 ॥

वृत्तिः॥ इल्ल शब्दान्ताद् बहुव्रीहि समासादि प्रत्ययो भवति। इल्लशब्दस्य लोपश्च ॥

प्रयोगः॥ पल्लिलि बाय्, कूरिलि कुडुगोल्, नाणिलि कलहंड ॥ इल्लादिति किम्। पेरेवणेयक् ॥

आक् च युद्धे पूर्वपदस्य ॥331॥

वृत्तिः॥ युद्धे विहिताद् बहुव्रीहिसमासादि प्रत्ययो भवति। पूर्वपदस्याकागमश्च।

प्रयोगः॥ हेल्लाहेल्लि, कल्लाकल्लि, कोलाकोलि, डाणाडाणि, खाडाखाडि ॥ युद्ध इति किम्। बल्गय्यं, मेल्गय्यं ॥ पूर्वपदग्रहण-मुत्तरस्यैव मा भूदिति॥

अरस्वादीनां दोर्लुबुत्तरपदे ॥332॥

वृत्तिः॥ अरस्वादीनां शब्दानां दोर्लुब् भवत्युत्तरपदे परे ॥

प्रयोगः॥ अरसिन मगक् – अरमगक्, बडगु नडु – बडनडु, तेरविन पोन् – तेरवोन् ॥ दुग्रहणमन्त्यादेश निवृत्त्यर्थम् ॥ उत्तरपद इति किम्। अरसु बंदं, अरसिन मगक् ॥ अरसु, नरवु, नेरवु, बरवु, तेरवु, बडगु, नोकवु, अक्तरवु इत्यरस्वादिराकृतिगणः॥

कृदगुणोक्तेः पूर्वस्वरेणैकार्थे ॥333॥

वृत्तिः॥ एकार्थे समानाधिकरणे उत्तरपदेपरे पूर्व पदभूतानां कृदन्तानां गुणवचनानां च दोः पूर्वस्वरेण सह लुब् भवति॥

प्रयोगः॥ अेत्तुवुदु कोल् – अेत्तुंगोल्, बत्तुवुदु पयन् – बत्तुंबयन्, दुगुवुदु तोट्टिल् – दुगुंदोट्टिल्, उक्कुवुदु तोरे – उक्कुंदोरे, बट्टितु मोले – बट्टमोले, ओक्किलु कन्नडं – ओक्गन्नडं, तोरितु मुडि – तोरमुडि॥ कृदगुणोक्तेरिति किम्। अरसुमगं – अरमगं ॥ एकार्थे इति किम्। तोरितर बिण्पु, तोरितु बिण्पु, ओक्कितुहारमित्यादौ बहुवचनात् समासाभावः। ओक्कारमित्यादिक, न्साराादि शब्देन समासात् सिद्धम् ॥

अेदेस्तत्रानिनादेः ॥ 334 ॥

वृत्तिः॥ तत्र पूर्वस्वरेण सह दोर्लोप विषये इनादिवर्जितस्य पूर्वपदस्य सम्बन्धिन इवर्णस्यार्धैकारादेशो भवति॥

प्रयोगः॥ पिरिदु मोले – पेर्मोले, बिक्किदु तावरे – बेक्दावरे ॥
र रिति किम् । करिदु मड्डु – कर्मड्डु ॥ तत्रेति किम् । दसि कोल्ल् – दसिगोल् ॥ अनिनादेरिति किम् । इनिदु मावु – इम्मावु, बिण्णदु कोने – बिण्गोने ॥ इन्, बिण्, किड्, बिडु, किरु, निड्ड इति इनादिराकृतिगणः॥

## दीर्घस्स्वरे ॥335॥

वृत्तिः॥ तत्रेति वर्तते । पूर्वपदे वर्तमानस्य स्वरस्य दीर्घादेशो भवति स्वरादावुत्तरपदे परे पूर्वस्वरेण सह दोर्लोपविषये ॥
प्रयोगः॥ करिदु इरुळ् – कारिरुळ्, पिरिदु ओडल् – पेरोडल् ॥
तत्रेति किम् । ओडलिन ओक्को – ओडलेक्को ॥ स्वर इति किम् । बेक्दावरे ॥

## न गुरोः ॥336॥

वृत्तिः॥ पूर्वपदे वर्तमानस्य गुरोः स्वरस्य दीर्घादेशो न भवति स्वरादावुत्तरपदे परे पूर्वस्वरेण सह दोर्लोपविषये ॥
प्रयोगः॥ पच्चोले, बेच्चोडु, बेक्काने, बेक्कगारे इत्यादावन्तरङ्गत्वाद् द्वित्वे कृते गुरुत्वाद् दीर्घाभावः॥

## किरस्तः ॥337॥

वृत्तिः॥ किरिति पूर्वस्वरेण सह लुप्तदुः किरिदु शब्दो गृह्यते । तस्य तकारादेशो भवति स्वरादावुत्तरपदे परे ॥
प्रयोगः॥ किरिदु ईळे – कित्तीळे, किरिदु अडि – कित्तडि ॥

## नडोर्दोष्टः ॥338॥

वृत्तिः॥ नडु इत्येतस्य दोष्टकारादेशो भवति स्वरादावुत्तरपदे परे॥
प्रयोगः॥ नडु इरुळ् – नट्टिरुळ्, नडु अडवि – नट्टडवि ॥
दुग्रहणमन्त्यादेश निवृत्त्यर्थम् ॥

## कडनिडः ॥339॥

वृत्तिः॥ कडिदु, निडिदु इत्येतयोष्टकारादेशो भवति स्वरादावुत्तरपदे परे तत्र विषये ॥
प्रयोगः॥ कडिदु आयं – कट्टायं, कडिदु ओल्दु – कट्टोल्दु, निडिदु उसुर् – निट्टुसुर्, निडिदु आयं – निट्टायं ॥

## किरश्च कुर्व्यञ्जने ॥340॥

वृत्तिः॥ कडिदु, निडिदु इत्येतयोः किरिदु इत्येतस्य च कुरागमो भवति व्यञ्जनादावुत्तरपदे परे तत्र विषये ॥

प्रयोगः॥ कडिदु गाडि — कडुगाडि, कडिदु चेल्लु — कडुचेल्लु। एवं निडुदोक्, निडुह्रुक्, किरुनगे, किरुगूण्पु॥ व्यञ्जन इत्युत्तरार्थम्॥

केच्च् पच्च् बेच्च श्चामः ॥341॥

वृत्तिः॥ केच्चने, पच्चने, बेच्चने शब्दानां चकारेण सहान्त्यस्य मकारादेशो 20/4/93 2.38 भवति व्यञ्जनादावुत्तरपदे परे तत्र विषये॥

प्रयोगः॥ केच्चने तेंगु — केंदेंगु॥ एवं केंदक्किर्, केंबोन्; पंदले, पंदोवल्; पंगाय्; बेन्नीर्, बेंगदिर्, बेंबूदि॥ चेत्यन्त्य मात्रस्य मा भूदिति॥ व्यञ्जन इति किम्। केच्चोले, पच्चडके, बेच्चोड्डु॥

केमः कश्चो वा ॥342॥

वृत्तिः॥ कृत मकारस्य केच्चने शब्दस्य ककारस्य चकारादेशो वा भवति व्यञ्जनादावुत्तरपदे परे तत्र विषये॥

प्रयोगः॥ चेंदेंगु, केंदेंगु; चेंदक्किर्, केंदक्किर्; चेंगाय्, केंगाय्॥ केम इति किम्। पंदले, बेंगल्॥ क इति अन्त्यस्य मा भूत्॥

✓ अतेसुर्बेमश्चोर्यादिषु च ॥343॥

वृत्तिः॥ कृतमकारस्य केच्चने शब्दस्य बेच्चने शब्दस्य चाद्यैकारेण सह इसुरादेशो वा भवति व्यञ्जनादावुत्तरपदे परे उर्यादिषु च परतस्तत्र विषये॥

प्रयोगः॥ किसुसंजे, किसुदक्किर्; बिसुनीर्, बिसुगादिर्; केसुरि, केसक्कि; बेसुरि, बेसोड्डु॥ पक्षे। केंजंजे, चेंजंजे; केंदक्किर्, चेंदक्किर्; बेन्नीर्, बेंगादिर्; केन्नुरि, केच्चुरि; केन्नक्कि, केच्चक्कि; बेन्नुरि, बेच्चुरि; बेन्नोड्डु, बेच्चोड्डु॥ इदमेव ज्ञापकमुर्यादिषु परतः केच्चने, बेच्चने शब्दयोस्तत्र विषये मादेशोऽपि भवतीति॥ अनयोरिति किम्। पंदले, पच्चडके॥ उर्यादिष्विति किम्। केच्चाने, बेच्चगूक्॥ उरि, अक्कि, ओड्डु, ओक्तु, ओण्णे, उगुर्, अणिल्, अवरे, अडविल्, अडके इत्युर्यादिराकृतिगणः॥

कृतो मो गदबज्यनकि ॥344॥

वृत्तिः॥ कृदन्तानां शब्दानां मकारादेशो भवति गदबजादावुत्तरपदे परे तत्र विषये। अकि तु न भवति॥ (345)

प्रयोगः॥ अेत्तुवुदु कोल् — अेत्तुंगोल्। एवं कुत्तुंगरि, तूगुंदोहिल्, आडुंदोरे, कुत्तुंबयन्, मिन्चुंबुक्कु, तूगुंजोडर्, ओडुंजगळं॥ अनकीति किम्। अेत्तु मगके, ओडुवडारि, ओत्तुव बावि, माडुवजगळं॥ कृत इति किम्। बेक्दावरे, कर्गांटि॥ गदबजीति किम्। तूगुव डाणे, केगुव सोगे॥ तत्रेति किम्।

पाड्वुदेळ्गे ॥ अनकीति वचनाद् बहुळवचनाच्चात्र विषये अग् विकल्पो-ऽव सीयते । सा च व्यवस्थित विभाषा विज्ञायत इति पड्डु धातोः कृदन्तस्य नित्यमेवाग् भवति । माडल्पडुव जगक्कं, तूगल्पडुव दीविगे ॥

अग् बहुळम् ॥345॥

वृत्तिः॥ अगागमो बहुळं भवति एकार्थे व्यञ्जनादावुत्तरपदे परे तत्र विषये ॥

प्रयोगः॥ बट्टितु – मोले बट्टमोले, तोरितु – मुडि तोरमुडि ॥ क्वचिन्न भवति । बल् मोले, मेल्लडि, कूर्गत्ति ॥ क्वचिद् विकल्पः । चुर्चुव कोक्कि – चुर्चुंगोक्कि ; तूगुव सोडर् – तूगुंजोडर् ॥ क्वचिदन्यदेव भवति । निडियुंदले, इक्कियुंबोक्कु ॥ (344)

कम् नणः ॥346॥

वृत्तिः॥ नकारान्तस्य णकारान्तस्य च शब्दस्य कमागमो बहुळं भवति एकार्थे व्यञ्जनादावुत्तरपदे परे ॥

प्रयोगः॥ मीनं बुक्कु, मींबुक्कु; बानं गुक्कि, बांगुक्कि; कण्णं दोक्कलि, कण्दोक्कलि; गोणं नाक्कि, गोण्णाक्कि ॥ न ण इति किम् । तेक् वळुरु ॥

व्याख्या ॥ गर्तवाची कुक्कि शब्दः । कतमः (89) इत्यादिना कस्य गादेशः । कम्कुमि (55) इति णकारस्य द्विर्भावः ॥

कः कुम् ॥347॥

वृत्तिः॥ ककारान्तस्य शब्दस्य कुमागमो भवति बहुळमेकार्थे व्यञ्जनादावुत्तरपदे परे ॥

प्रयोगः॥ बेक्कुं बट्टे, बेक्बट्टे ; तेक्कुं बसुर्, तेक्वसुर् ॥

दोर्मौंशिन्यडिमेगोः ॥348॥

वृत्तिः॥ अडि, मेगु इत्यनयोरंशवाचिनो र्दो र्मकारादेशो भवति व्यञ्जनादावंशिवाचिनि पदे परे ॥

प्रयोगः॥ कय्य अडि – अंगय्, काल मेगु – मेंगाल् ॥ अनयोरिति किम् । कय्य ओक्कु – ओक्कय्, काल पोऱगु – पोऱकाल् ॥ अंशिनीति किम् । अडिमेगुगळ् ॥ व्यञ्जनादाविति किम् । इट्टिय अडि – अडियिट्टि ॥

व्याख्या ॥ अंशिना भिन्नेन (306) इति समासः ॥

लुप् पिन्दुमुन्दोः ॥349॥

वृत्तिः॥ पिंदु, मुंदु इत्येतयोरंशवाचिनोर्दोर्लुब् भवति व्यञ्जनादावंशिवाचिनि पदे परे ॥

प्रयोगः॥ मागिय मुंदु – मुंमागि, काल मुंदु – मुंगाल्, काल पिंदु – पिंगाल्, तलेय पिंदु – पिंदले॥

निल्यं मेवरि ॥350॥

वृत्तिः॥ अधिकारोऽयम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र मेवरि नित्यं भवतीति वेदितव्यम्॥

ओण्डुनाल्कैदोरद्वन्द्वे ॥351॥

वृत्तिः॥ ओण्डु, नाल्कु, अय्दु इत्येतेषां दोर्लुब् भवति व्यञ्जनादावुत्तर पदे परे न द्वन्द्वसमासे। मेवरि तु नित्यं भवति। मेवरि नित्य विधानादन्यत्र विकल्पः॥

प्रयोगः॥ ओण्गावुदं, ओण्डुगावुदं; ओण्देसे, ओण्डुदेसे; नाल्मोगं, नाल्कुमोगं; नाल्गावुदं, नाल्कुगावुदं; अय्मुडुं, अय्दुमुडुं; अय्मोले, अय्दुमोले; ओण्मे, ओण्बर्; नाल्मे, नाल्वर्; अय्मे, अय्वर्॥ अद्वन्द्व इति किम्। अय्दुनाल्केण्डु॥ व्यञ्जनादाविति किम्। ओण्टानेयं, नाल्काक्कु, अय्दाडु॥

व्याख्या॥ .. संख्यायामेद्वारे (433), संख्याया वर् (241) इत्येताभ्यां योगाभ्यां मे प्रत्ययो वर्प्रत्ययश्च विधास्येते। .. ओण्टोः (99) ...

मूरोः ॥352॥

वृत्तिः॥ मूरु इत्यस्य दोर्लुब् भवति व्यञ्जनादावुत्तरपदे परे न द्वन्द्वसमासे। मेवरि तु नित्यं भवति॥

प्रयोगः॥ मूगावुदं, मूरुगावुदं; मूदलेयं, मूरुतलेयं; मूमे, मूवर्॥ अद्वन्द्व इति किम्। मूरुनाल्कु॥ व्यञ्जन इति किम्। मूरावु। योगविभाग उत्तरार्थः॥

ह्रस्वस्तत्र वा ॥353॥

वृत्तिः॥ मूरु इत्यस्य दुलोपे सति ह्रस्वादेशो वा भवति॥

प्रयोगः॥ मुग्गुड्डे, मूग्गुड्डे; मुक्कोडे, मूगोडे; मुच्चोट्टु, मूचोट्टु॥ तत्रेति किम्। मूरुगावुदं॥

व्याख्या॥ .. मुग्गुड्डे। मोः (64) इति गकारस्य द्विर्भावः॥

मेवरि ॥354॥

वृत्तिः॥ मूरु इत्यस्य ह्रस्वादेशो वा भवति मेवरि परे॥

प्रयोगः॥ मुम्मे, मूमे; मुव्वर्, मूवर्॥

आरोः ॥355॥

वृत्तिः॥ आरु इत्यस्य ह्रस्वादेशो भवति व्यञ्जनादावुत्तरपदे परे न

द्वन्द्व समासे। मेवरि तु नित्यम्। अन्त्यस्य प्रयोजनाभावादादेरेव भवति॥
प्रयोगः॥ अरुगावुदं, आरुगावुदं; अरुमोक्कं, आरुमोक्कं; अरुमे, आरुमे॥

लुप् सासिरैक्कोः॥356॥

वृत्तिः॥ सासिर, ऐक्कु इत्येतयोः लुब् भवति व्यञ्जनादावुत्तरपदे परे न द्वन्द्व समासे। मेवरि तु नित्यम्॥
प्रयोगः॥ सासिर्द्दलेयं, सासिरतलेयं; सासिद्दोंकं, सासिरतोकं; ऐक्कगय्यं, ऐक्कुकय्यं; ऐक्कगावुदं, ऐक्कुगावुदं; सासिम्मे, सासिर्व्वर्; ऐक्कमे, ऐक्कवर्॥

शित्॥357॥

वृत्तिः॥ यदितः परमनुक्रमिष्यामस्तत्सर्वं शिद्वद् भवतीति वेदितव्यम्॥

ओरोंदोः॥358॥

वृत्तिः॥ व्यञ्जन इति निवृत्तम्॥ ओंदु इत्यस्य ओरित्यादेशो भवति स च शिद्वद् भवति उत्तरपदे परे न द्वन्द्वसमासे। मेवरि तु नित्यम्॥
प्रयोगः॥ ओर्त्तले, ओंदुतले; ओर्क्कणंगे, ओंदुकण्णंगे; ओर्न्नुडियं, ओंदुनुडियं; ओम्मे, ओर्व्वर्॥

अेरडोरिर्॥359॥

वृत्तिः॥ अेरडु इत्यस्य इरित्यादेशो भवति स च शिद्वद्भवति उत्तरपदे परे न द्वन्द्वसमासे। मेवरि तु नित्यम्॥
प्रयोगः॥ इर्ब्बाळ्, अेरडुबाळ्; इर्त्तले, अेरडुतले; इम्मे, इर्व्वर्॥
व्याख्या॥ इर्त्तले, अेरडुतले। जादिष्टाद् रक्तः (90) इति तृतीयवर्णाभावः॥

स्वरे मुय् मूरोः॥360॥

वृत्तिः॥ मूरु इत्यस्य मुय् इत्यादेशः शिद्वद् भवति स्वरादावुत्तर पदे परे न द्वन्द्व समासे। मेवरि तु नित्यम्॥
प्रयोगः॥ मुय्याने, मूराने; मुय्येळ्कु, मूरेळ्कु; मुय्मे, मुय्वर्॥
स्वर इति किम्। मुत्तले, मूरुतले॥

ओंबत्तोस्तोम् पत्तौ॥361॥

वृत्तिः॥ ओंबत्तु इत्यस्य तोमित्यादेशः शिद्वद् भवति पत्तुशब्दे परे न द्वन्द्व समासे। मेवरि तु नित्यम्॥
प्रयोगः॥ तोंबत्तु, ओंबत्तुपत्तु। तोम्मे, तोंबर्॥ पत्ताविति किम्। ओंबत्तु-नाल्कु॥

ओंबय् नूरु सासिरे॥362॥

वृत्तिः॥ ओंबत्तु इत्यस्य ओंबय् इत्यादेशः शिद्वद् भवति नूरुशब्दे सासिरशब्दे च परे न द्वन्द्वसमासे। मेवरि तु नित्यम्॥
प्रयोगः॥ ओंबयनूरु, ओंबत्तुनूरु; ओंबय्सासिरं, ओंबत्तुसासिरं; ओंबय्मे, ओंबय्वर्॥ नूरुसासिर इति किम्। ओंबत्तु लक्कं॥

पयिन् पत्तोः ॥363॥

वृत्तिः॥ पत्तु इत्यस्य पयिन् इत्यादेशः शिद्वद् भवति नूरुशब्दे सासिर शब्दे च परे न द्वन्द्वसमासे। मेवरि तु नित्यम्॥
प्रयोगः॥ पयिन्नूरु, पत्तुनूरु, पयिन्जासिरं, पत्तुसासिरं; पयिम्मे, पयिंबर्॥ अनयोरिति किम्। पत्तु लक्कं॥

पन्नोंदौ ॥364॥

वृत्तिः॥ नित्यं मेवरि इति निवृत्तम्॥ पत्तु इत्यस्य पन् इत्यादेशः शिद्वद् भवति ओंदुशब्दे परे न द्वन्द्वसमासे॥
प्रयोगः॥ पन्नोंदु॥ ओंदाविति किम्। पत्तोंबत्तु॥

ओरडौ ॥365॥

वृत्तिः॥ पत्तु शब्दस्य पन् इत्यादेशः शिद्वद्भवति ओरडुशब्दे परे॥
प्रयोगः॥ पन्नेरडु॥ योगविभागो निर्देशार्थः॥

पदिर्मूरुवादिषट्के ॥366॥

वृत्तिः॥ पत्तु इत्यस्य पदिरादेशः शिद्वद्भवति मूरु इत्येतदादिषु षट्सु शब्देषु परेषु॥
प्रयोगः॥ पदिमूरु, पदिनाल्कु, पदिनय्दु, पदिनारु, पदिनेळु, पदिनेंटु॥ मूरुवादिषट्क इति किम्। पत्तोंबत्तु॥

पदेर्नक् स्वरे ॥367॥

वृत्तिः॥ पदि इत्यस्य नगागमो भवति स्वरादावुत्तरपदे परे॥
प्रयोगः॥ पदिनय्दु, पदिनारु, पदिनेळु, पदिनेण्टु॥ पदेरिति किम्। पत्तोंबत्तु, पन्नोंदु॥ स्वर इति किम्। पदिमूरु, पदिनाल्कु॥

केळगोः कीळ्किनौ ॥368॥

वृत्तिः॥ केळगु इत्यस्य कीळ्, किन् इत्येतावादेशौ शितौ भवत उत्तरपदे परे॥
प्रयोगः॥ कीकेरि, कीळ्पोट्टे, किन्नेलं, किन्निट्टे॥
व्याख्या॥ (306), (53)

किरिदुबेट्टुपेरगोः कुरुबिरुपेडं ॥369॥

वृत्तिः॥ किरिदु, बेट्टु, पेरगु इत्येतेषां यथाक्रमं कुरु, बिरु, पेड

इत्यादेशाः शितौ भवन्त्युत्तरपदे परे ॥
प्रयोगः॥ कुरुगड्डि, कुरुगड्डु, कुरुमने, बिरुगाळि, बिरुनुडि, किरुवज्जे, पेडगाल्, पेडगय्, पेडतले ॥

आदीदूदद्विदूदोः ॥370॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेषां यथाक्रमं आत्, ईत्, ऊत् इत्येते आदेशा भवन्त्युत्तरपदे परे ॥
प्रयोगः॥ आनाडु, आबीडु; ईयाने, ईमने; ऊमानिसं, ऊवाळ् ॥

आगेल्लस्य वा ॥371॥

वृत्तिः॥ ऎल्ल शब्दस्य आगागमो वा भवत्युत्तरपदे परे ॥
प्रयोगः॥ ऎल्लाधनं, ऎल्लधनं, ऎल्लाजनंगळ्, ऎल्लजनंगळ् ॥

कोंकोः कुडुः ॥372॥

वृत्तिः॥ कोंकु इत्येतस्य कुडु इत्यादेशो वा भवत्युत्तरपदे परे ॥
प्रयोगः॥ कुडुविल्लं, कोंकुविल्लं; कुडुवुर्वु, कोंकुवुर्वु ।

महतो मा व्यञ्जने ॥373॥

वृत्तिः॥ महच्छब्दस्य मा इति शिद्वदादेशो वा भवति व्यञ्जनादावुत्तरपदे परे।
प्रयोगः॥ मादेवं, महादेवं; मादानि, महादानि ॥ व्यञ्जन इति किम् । महांगने, महाब्धि ॥

सहस्य सा ॥374॥

वृत्तिः॥ सहशब्दस्य सा इति शिद्वदादेशो वा भवति व्यञ्जनादावुत्तरपदे परे।
प्रयोगः॥ सादेवं, सहदेवं; सावासि, सहवासि ॥ व्यञ्जन इति किम् । सहार्जुनं॥

ऒक्कमेकस्यासंस्कृतेऽपि ॥375॥

वृत्तिः॥ एक शब्दस्य ऒक्क इति शिद्वदादेशो वा भवति संस्कृतेऽपि व्यञ्जनादावुत्तरपदे परे ॥
प्रयोगः॥ ऒक्कसरं, ऒकसरं; ऒक्कराशि, ऒकराशि; ऒक्कतुकं, ऒकतुकं ॥ 7.3.93 / 3.5 ...
व्यञ्जन इति किम् । ऒकांगं, ऒकावळि ॥ इदमेवहिज्ञापकमसंस्कृतेनाप्येक-शब्दस्य समासोऽस्तीति ॥

त्रिचतुरोस्तिच्चौ वा तद्धिते च ॥376॥

वृत्तिः॥ त्रि, चतुर् इत्येतयोः ति च्चौ इत्यादेशौ शितौ वा भवतः संस्कृतेऽप्यसंस्कृतेपि व्यञ्जनादावुत्तरपदे परे तद्धिते च परे ॥
प्रयोगः॥ तिदंडि, त्रिदंडि, तिगुंड, त्रिकुंड, तिमोगं, त्रिमुखं; चौदंतं, चतुर्दंतं, चौविधं, चतुर्विधं, चौभागि, चतुर्भागि ॥ तद्धिते । तितयं, त्रितयं; चौतयं, चतुष्टयं ॥ अनयोरिति किम् । पंचमुखं, पंचतयं ॥

द्वेर्दूदु ॥377॥

वृत्तिः॥ द्विशब्दस्य दू, दु इति शितावादेशौ वा भवतः संस्कृतेऽप्यसंस्कृतेऽपि व्यञ्जनादावुत्तरपदे परे तद्धिते च परे॥

प्रयोगः॥ दूमुकं, दुमुकं, द्विमुखं; दूजावं, दुजावं, द्वियामं; दूतयं, दुतयं, द्वितयं; दूतीयं, दुतीयं, द्वितीयं॥ इमावेवयोगौ गमकौ द्वित्रिचतुश्शब्दानामत्रविषये लिङ्गसंज्ञा भवतीति॥

कीलारादीनि यथोपदिष्टम् ॥378॥

वृत्तिः॥ कीलारादयः शब्दा यथोपदेशं साधवो वेदितव्याः॥

प्रयोगः॥ कीलारं, कीरारं; देवारं, चवकारं, गूडारं, दीवळिगे, दीवाळिगे; सीयदरं, सीयदारं, सीयबारं; सिरिदरं, सिरिदारं, सिरिबारं; वंकदरं, वंकदारं, वंकबारं; पाणीयदरं, पाणीयदारं, पाणीयबारं; कंटेयदरं, कंटेयदारं, कंटेयबारं; चौवट्टं, पायवट्टं, रन्नवट्टिगे, संतेवट्टणं, देसेवलि, कन्नवुरं, बण्णवुरं, अंतवुरं, कंडपटं, निब्बुद्धि, मालेहोरणं, दंमाणि, चम्मटिगे, चम्मट्टिगे, कंसाळं, देगुलं, सूयाणं, देशाळे, दुगं, दूगं, तिगं, तीगं; चौकं इति कीलारादिराकृतिगणः।

मक् पेऱ्ग्वादीनाम् ॥379॥

वृत्तिः॥ पेऱ्ग्वादीनां मगागमो वा भवति व्यञ्जनादावुत्तरपदे परे॥

प्रयोगः॥ पेडंगय्, पेड्गय्; बेट्टुंबोळे, बेट्टुबोळे; बेट्टुंगाडु, बेट्टुगाडु; आगसं बोच्चं, आगसबोच्चं; बग्गंदोवल्, बग्गदोवल्; कक्कुंदरि, कक्कुदरि; मद्दुंगूळ्, मद्दुगूळ्; कोंकुंडाणे, कोंकुडाणे॥ पेऱ्ग्वादयः प्रयोगगम्याः॥

धातावुतः ॥380॥

वृत्तिः॥ उकारान्तस्य शब्दस्य मगागमो वा भवति व्यञ्जनादौ धातावुत्तरपदे परे॥

प्रयोगः॥ मडुंबीळ्दं, मडुबीळ्दं, गिडुंगडिदं, गिडुगडिदं; काडुंगंडं, काडुगंडं; बीडुंबोक्कं, बीडुबोक्कं॥ धाताविति किम्। मडुनीर्, गिडुगाय्॥ व्यञ्जन इति किम्। गिडुवगुळ्दं॥ उत इति किम्। ओलेगंडं, बडिगोंडं॥ (298) (299).

अतः ॥381॥

वृत्तिः॥ अकारान्तस्य शब्दस्य मगागमो वा भवति व्यञ्जनादौ धातावुत्तरपदे परे॥

प्रयोगः॥ बक्पं बिडिदं, बक्पविडिदं; नेलं बिडिदं, नेलविडिदं॥
योग विभाग उत्तरार्थः॥

संस्कृतस्य नित्यम् ॥382॥

वृत्तिः॥ अकारान्तस्य संस्कृतशब्दस्य नित्यं ममागमो भवति व्यञ्जनादौ
च्यातानुत्तरपदे परे॥
प्रयोगः॥ चक्रं गोंडं, वज्रं गोंडं, खड्गं बिडिदं, दंडं गोंडं॥ संस्कृतस्येति
किम्। मरंगडिदं, मरगडिदं॥ अत इति किम्। विधुंगंडं, विधुगंडं॥

गुक्कबोलि ॥383॥

वृत्तिः॥ अकारान्तस्य शब्दस्य नित्यं मगागमो भवति गुक्किप्रत्यये
बोल प्रत्यये च परे॥
प्रयोगः॥ आटंगुक्कि, लंचंगुक्कि, धनंगुक्कि; इंद्रंबोल्, चंद्रंबोल्,
आतंबोल्, अणंबोल्॥ गुक्किबोलीति किम्। आटगार्, गेल्लगार्;
इंद्रनबोल्, चंद्रनबोल्॥ (414), (429).

उतो गार् ॥384॥

वृत्तिः॥ उकारान्तानां शब्दानां मगागमो नित्यं भवति गार् प्रत्यये परे॥
प्रयोगः॥ पाडुंगार्, जूदुंगार्, ओदुंगार्॥ उत इति किम्। कुंभगार्,
मणिगार्॥ गार् इति किम्। पाडुगं, जूदुगं॥ (411)

सम्भ्रमेऽसकृत् ॥385॥

वृत्तिः॥ आशुप्रतिपादने प्रयोक्तृत्वरणं सम्भ्रमः। तस्मिन् गम्यमाने
यत्पदं वाक्यं वा वर्तते तदसकृदनेकवारं प्रयुज्यते॥
प्रयोगः॥ कुडु कुडु कुडु, तुडु तुडु तुडु, ओप्पिसोप्पिसोप्पिसु, नोडु
नोडु नोडु, इत्त बा इत्त बा इत्त बा, आनेबंदुदानेबंदुदानेबंदुदु, दंडु
बंदुदेक्कु दंडुबंदुदेक्कु दंडुबंदुदेक्कु॥ सम्भ्रमादौ पदं वाक्यं वा वर्तते
न तदवयव इति नासावसकृद् द्वि र्वा भवति॥ सम्भ्रम इति किम्।
आनेबंदुदु॥

सातत्यक्रियासाकल्याभीक्ष्ण्ये द्विः ॥386॥

वृत्तिः॥ सातत्यमविच्छेदः क्रियान्तरैरव्यवधानं। क्रियासाकल्यमवयव-
क्रियाणां कार्त्स्न्यम्। आभीक्ष्ण्यमावृत्तिः पौनःपुन्यं॥ सातत्याद्यर्थे
प्रवर्तमानं शब्दरूपं द्विः प्रयुज्यते॥
प्रयोगः॥ सातत्ये। बंदं बंदं, पोदं पोदं, कंडं कंडं॥ क्रियासाकल्ये।
कोय्कोय्यें दु कोय्दं, पोय्पोय्येनुत्ते पोय्दं, बाबायेनुत्ते बंदं॥ आभीक्ष्ण्ये।
अट्टट्टि कुपिदं, उंडुंडुपोदं, नोडिनोडिनक्कं॥ एतेष्विति किम्।

बंदं, कोरदं, उंडं, पोदं ॥

नानावधारणे ॥387॥

वृत्तिः॥ नानाभूतानां भेदेनेयत्तापरिच्छेदो नानावधारणं। तत्रवर्तमानं शब्दरूपं द्विः प्रयुज्यते ॥

प्रयोगः॥ ईजाक्किगेयोक्किवर्गो पोन्नं पोन्नं कुडु, ईगंटिनोक्किवर्गो पोन्नं पोन्नं कुडु – प्रत्येकं निष्कमात्रं देहिनाधिकमित्यर्थः॥ नानेति किम्। जाक्किगेयोक्किवर्गो पोन्नं कुडु – एकमेव निष्कमित्यर्थः॥ अवधारण इति किम्। जाक्किगेयोक्किवर्गो पोन्नं कुडु। अत्र पोन् शब्दो धनवाचीति नावधारणम्। एकं द्वौ त्रीन् दश वा निष्कान् देहीत्यर्थः॥ 15/5/93 8.10

आधिक्ये ॥388॥

वृत्तिः॥ आधिक्यं प्रकर्षः। तस्मिन् द्योत्ये यद् वर्तते पदं वाक्यं वा तद् द्विः प्रयुज्यते ॥

प्रयोगः॥ तुक्किल् तुक्किल् – अधिकं नाम इत्यर्थः। एवं आदुदादुदु, लेसुलेसु, ओमगप्पुदेमगप्पुदु, ओक्किदक्कोक्किदक्कु॥ आधिक्य इति किम्। तुक्किल्, लेसु ॥ योगविभाग उत्तरार्थः॥

तुदिमोदलः पूर्वस्यादिस्वरात् त्तश्च ॥389॥

वृत्तिः॥ आधिक्ये द्विः प्रयुज्यमानस्य तुदिशब्दस्य मोदल् शब्दस्य च पूर्वस्यादिस्वरादुत्तरावयवस्य त्त इति द्वितकारादेशो भवति ॥

प्रयोगः॥ तुत्ततुदि, मोत्तमोदल् ॥ तुदिमोदल इति किम्। ओक्कगोक्कु॥ पूर्वस्येत्युत्तरस्य मा भूत्। आदिस्वरादित्यन्तस्वरान्मा भूत्॥

कडेनडोट्टः ॥390॥

वृत्तिः॥ आधिक्ये द्विरुच्यमानयोः कडे नडु इत्येतयोः पूर्वस्यादिस्वरादुत्तरावयवस्य ट्ट इत्यादेशो भवति। पूर्ववदत्रापि द्विटकारको निर्देशः॥

प्रयोगः॥ कट्टकडे, नट्टनडु ॥ अनयोरिति किम्। देसे देसे, मूले मूले ॥

दोरद् गुणोक्तेः ॥391॥

वृत्तिः॥ आधिक्ये द्विरुच्यमानस्य गुणवचनस्य पूर्वस्य दोरकारादेशो भवति॥

प्रयोगः॥ तोरतोर मुत्तुगळ्, बट्ट बट्ट मोलेगळ्, बिळिय बिळियंचेगळ्, दोड्ड दोड्डानेगळ्॥ गुणोक्तेरिति किम्। पत्तु पत्तानेगळ्॥

गोठ्यञ्जनादेर्लुप् ॥392॥

वृत्तिः॥ आधिक्ये द्विरुच्यमानानां गु शब्दान्तानां व्यञ्जनादीनां शब्दानां पूर्वस्य दोर्लुब् भवति ॥

प्रयोगः॥ केळकेळगे पोदं – अत्यन्तमधोगत इत्यर्थः। एवं सेरसेरगु,

बेक्कबेक्कु, तक्कतक्कु, मेमेगु, मूमूगु ॥ गोरिति किम्। बेगेबेगे॥ व्यञ्जनादेरिति किम्। ओक्गोक्गु॥

धातोर्बहुस्वरस्य ॥393॥

वृत्तिः॥ आधिक्ये द्विरुच्यमानानां गुशब्दान्तानां व्यञ्जनादीनां बहुस्वराणां धातूनां पूर्वस्य दोर्लुब् भवति॥

प्रयोगः॥ तोक्कतोक्कगिडुडु, बेक्कबेक्कगिडुडु, मुक्कुमुक्कुगिडुडु, मोक्मोक्कगिडुडु॥ बहुस्वरस्येति किम्। द्विस्वरे मा भूत्॥

वानुकरणे ॥394॥

वृत्तिः॥ अनुकरणे वर्तमानं शब्दरूपं द्विः प्रयुज्यते। तत्र च पूर्वस्य दोर्लुब् वा भवति॥

प्रयोगः॥ कम्मने कम्मने, कम्मकम्मने; तण्णने तण्णने, तण्णतण्णने; मेल्लने मेल्लने, मेल्लमेल्लने॥

केक्कुमेगोस्सामीप्ये ॥395॥

वृत्तिः॥ सामीप्यं प्रत्यासत्तिर्देशकृता कालकृता वा। तस्मिन् द्योत्ये केक्कु, मेगु इत्येतयोः द्विः प्रयोगो भवति। तत्र च पूर्वस्य दोर्लुब् वा भवति॥

प्रयोगः॥ केक्केक्को नरकबिलंगळ्, मेमेगे स्वर्गपटलंगळ्, केक्को केक्को नरकबिलंगळ्, मेगे मेगे स्वर्गपटलंगळ्; केक्केक्को दुर्भिक्षं, केक्को केक्को दुर्भिक्षं; मेमेगे सुभिक्षं, मेगेमेगे सुभिक्षं॥ सामीप्य इति किम्। मरदमेगे तिंगळ्, मुगिलमेगे तारगे, तलेय मेगे कोडं इत्यत्रोत्तराधर्यमात्रं न सामीप्यम्॥

मोदलोऽन्यतोऽतिशये ॥396॥

वृत्तिः॥ दोरिति निवृत्तम्॥ अन्येभ्योऽतिशये द्योत्ये मोदल् शब्दस्य द्विः प्रयोगो भवति तत्र पूर्वस्य लुब् वा भवति॥

प्रयोगः॥ बसंतदोळ् चुगे मोदमोदलोळ् पुट्टुदु, मोदल् मोदल् पुट्टुदु— अन्येभ्यः प्रथममेव पुष्पितो भवतीत्यर्थः। चुरदोळिवर्मोदमोदलोळेन्चर्॥ अन्यत इति किम्। मामरं मोदल् नेरे पुट्टुदु बळिक्कंकाट्टुदु॥ अत्र स्वव्यापारापेक्षयैवातिशयेन स्वान्यापेक्षया॥ अतिशय इति किम्। मोदलुंडं॥

वीप्सानुपूर्व्ये सुपश्श्लुप् ॥397॥

वृत्तिः॥ बहूनां सजातीयानामर्थानां साकल्येन प्रत्येकं क्रियादिभिः प्रयोक्तुराप्तुमिच्छा वीप्सा। क्रमानुल्लंघनमानुपूर्व्यम्॥ वीप्सायामानुपूर्व्ये

च वर्तमानं शब्दरूपं द्विः प्रयुज्यते । तत्र च पूर्वस्य सुपः श्लुब्वा भवति।
प्रयोगः॥ वीप्सायाम् । केरिकेरियोक् मेरेदं, केरियोक् केरियोक् मेरेदं;
मने मनेगको प्पिदुवु, मनेगक् मनेगको प्पिदुवु ; पोकेपोकेगक चेल्लु,
पोकेगक पोकेगक चेल्लु ; तंतं मसिरि, तम्म तम्म सिरि ॥ आनुपूर्व्ये ।
मोदमोदलोक् दोड्डित्तु, मोदलोक् मोदलोक् दोड्डित्तु; तुदितुदियोक्
सण्णं, तुदियोक् तुदियोक् सण्णं; अज्जज्जरं वंदिसु, अज्जरनज्जरं वंदिसु;
किरिय किरियरं बेसगोक् , किरियरं किरियरं बेसगोक् ॥ वीप्सानुपूर्व्ये
इति किम् । मनेयोप्पितु, तुदियोक् सण्णं ॥

तिङश्चाबाधे ॥398॥

वृत्तिः॥ आबाधः पीडा । तद् विषये वर्तमानं शब्दरूपं द्विः प्रयुज्यते ।
तत्र च पूर्वस्य सुपस्तिङश्च श्लुब् वा भवति ॥
प्रयोगः॥ मर मरं ; मरं मरं ; पोद पोदं, पोदं पोदं; कल् कल्लं,
कल्लं कल्लं ; पुल्पुल्लोक् , पुल्लोक् पुल्लोक् ; बंद बंदय् , बंदय् बंदय्;
बार्बारें, बारें बारें; पोप पोपें, पोपें पोपें ॥ आबाध इति किम् ।
मरं, कल्, बंदय्, पोपें ॥

वाक्यादेरामन्त्रितस्यासूया सम्मति कोप कुत्सन-
भर्त्सनेऽन्यतरस्य प्लुतश्च ॥399॥

वृत्तिः॥ पर गुणा सहनमसूया । कार्येष्वाभिमत्यं सम्मतिः । कोपः क्रोधः ।
कुत्सनं निन्दा । दण्डाविष्करणं भर्त्सनं ॥ असूयाद्यर्थेषु वर्तमानस्य
वाक्यस्यादिभूतं यदामन्त्रितपदं तस्य द्विः प्रयोगो भवति । तत्र
च पूर्वस्योत्तरस्य वा प्लुतो वा भवति ॥
प्रयोगः॥ असूयायां । देवदत्ता 3 देवदत्त, देवदत्त देवदत्ता 3 , देवदत्त
देवदत्त निनगेनुमिल्लं ॥ सम्मतौ । मगने 3 मगने, मगने मगने 3,
मगने मगने नीनो क्किरतु गेय्दय् ॥ कोपे । बाणसिगा 3 बाणसिग,
बाणसिग बाणसिगा 3, बाणसिग बाणसिग नीनिर्द्दपयो सत्तयो ॥
कुत्सने । सतिये 3 सतिये, सतिये सतिये 3, सतिये सतिये निन्न
पेण्तनमं सुडुगे ॥ भर्त्सने । दुरुका 3 दुरुक, दुरुक दुरुका 3,
दुरुक दुरुक निन्न कोंडपें कडिदपें ॥ वाक्यादेरिति किम् । ओक्किदक्
नीं मगके ॥ आमन्त्रितस्येति किम् । देवदत्तनो क्किदं ॥ असूयादि
ग्रहणं किम् । पार्व्व नीं जन्ममं माडु, अरसनीं क्रकगमं माडु ॥
असकृदधिकारादिह सर्वत्र त्रिर्वचनमपि केचिदिच्छन्ति ॥ बंद बंद बंदं,
बंदं बंदं बंदं; उंडुंडुंडु पोदं, तोक तोक तोक गित्तु, बेकबेकबेकगित्तु

मगने मगने मगने इति ॥

दूराद्धाने बहुलम् ॥400॥

वृत्तिः॥ दूराद्धाने वर्तमानस्यामन्त्रितस्य पदस्य बहुलं प्लुतो भवति॥
प्रयोगः॥ ओले अण्णा 3 इत्त बा, ओले अक्का 3 इत्त बा, ओले अण्ण इत्त बा3, ओले अक्क इत्त बा 3 ॥ बहुलग्रहणाद्धान विषये अनामन्त्रितस्यापि प्लुतो भवति। ओले 3 अण्ण इत्त बा, ओले 3 अक्क इत्त बा, ओले अम्म बे3ग बा, ओले अय्य बे3ग बा॥ क्वचिदन्यात्रापि। अय्यो 3 अक्क, अय्यो 3 अण्ण, ओहो 3 मगने, ओहो 3 तंदे इत्यादयो यथालक्ष्यमनुसर्तव्याः॥

वाद्यात् तद्धितः॥401॥

वृत्तिः॥ अधिकारोऽयम्। इत ऊर्ध्वं यैः सूत्रैः यस्मिन्नर्थविषये प्रत्यया वक्ष्यन्ते तत्र प्रथमोपात्तात् तस्मिन्नर्थविशेषे ते प्रत्यया वा भवन्ति। ते च तद्धितसंज्ञा भवन्ति इत्यधिकृतं वेदितव्यम्॥
प्रयोगः॥ वक्ष्यति तदस्यास्त्यस्मिन्निति वंतः (402)। तदित्येतस्मात् प्रत्ययोत्पत्तिः॥ आयुवुंटीतंगे— आयुवंतं, जसमुंटीतंगे – जसवंतं॥ अनेकेषामुपादानात् प्रकृत्य नियमे नियमार्थोऽयमारब्धः। तद्धितप्रदेशाः वृत्तेः (248) इत्येवमादयः॥

तदस्यास्त्यस्मिन्निति वंतः॥402॥

वृत्तिः॥ तदिति प्रथमा समर्थादस्यास्मिन् वास्ति इत्यर्थे वंतप्रत्ययो वा भवति। स च तद्धितसंज्ञो भवति। वाधिकारात् पक्षे यथायोगं वाक्यं समासश्च भवति।
प्रयोगः॥ आयुवुंटीतंगे, ईतनोळ् मेण्— आयुवंतं। एवं जसवंतं, गुणवंतं, बुद्धिवंतं॥ तदिति प्रकृति निर्देशार्थम्॥ अस्तीति किम्। धनमादुदीतंगे, धनमप्पुदीतंगे, धनंसमीपमीतंगे इत्यादौ भूत-भविष्यत् सत्तयोस्समीपादो च मा भूदिति। इति करणं विवक्षार्थम्। तेन
श्लो०॥ भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने। 22/5/93 7.33P
संसर्गेऽस्ति विवक्षायां प्रायो वन्तादयो मताः॥
भूम्नि। धनवंतं, द्रव्यवंतं॥ निन्दायां। जगळवंतं, दोषवंतं॥ प्रशंसायाम्। रूपवंतं, गुणवंतं॥ नित्ययोगे। विसवंतं सेसं, रक्केवंतं गरुडं॥ अतिशायने। पोट्टेवंतं बेनकं॥ संसर्गे। दंडवंतं, छत्तिगेवंतं॥ प्रायिकमेतद् भूमादिदर्शनं। क्वचित् सत्तामात्रेपि प्रत्ययो दृश्यते। जन्नविरवंतं पार्श्वं, पेंडतिवंतनीतं॥ वंतप्रत्ययान्तादस्तित्व विवक्षायां वंतप्रत्ययेन भवति॥ नीतियुंटिवर्गे—

नीतिवंतर, नीतिवंतरुटिंगे इत्यत्र वाक्यमेव भवति ॥ कर्मधारयाद् वंतो न भवति। अलगंणंटीतंगे इत्यत्र बहुव्रीहिरेव भवति। अलगंणमिति ॥ तदपीच्छन्ति केचित्। अलगंणवंतं, तोरमुडिवंते ॥

गुणोक्तेः को दुलुप् च ॥403॥

वृत्तिः॥ तदिति प्रथमासमर्थाद् गुणवचनादस्यास्मिन् वास्तीत्यर्थे कप्रत्ययो वा भवति शेर्लोपश्च ॥

प्रयोगः॥ करिदुटीतंगीतनोक् मेण् — करिकं। एवं बिळिकं, कडिकं, तोरिकं॥ गुणोक्तेरिति किम्। कण्वंतं, काल्वंतं॥ (134)

आळिश्शीलम् ॥404॥

वृत्तिः॥ तदिति प्रथमा समर्थादस्य शीलमित्यस्मिन्नर्थे आळि प्रत्ययो वा भवति॥

प्रयोगः॥ जूदु शीलमीतंगे — जूदाळि। एवं मातालि, सिग्गाळि, ओदाळि, हडपाळि॥

इगः पण्यम् ॥405॥

वृत्तिः॥ तदिति प्रथमा समर्थादस्य पण्यमित्यस्मिन्नर्थे इग प्रत्ययो वा भवति॥

प्रयोगः॥ तंबुलं पण्यमीतंगे— तंबुलिगं। एवं दवसिगं, दूसिगं, कामिगं, पण्णिगं॥ (132)

शिल्पम् ॥406॥

वृत्तिः॥ तदिति प्रथमा समर्थादस्य शिल्पमित्यस्मिन्नर्थे इग प्रत्ययोवा भवति॥

प्रयोगः॥ मद्दळे शिल्पमीतंगे — मद्दळिगं। एवं सरवंदिगं, वीणिगं, गाणिगं, केणिगं॥

तदाचरति ॥407॥

वृत्तिः॥ तदिति द्वितीया समर्थादाचरतीत्यस्मिन्नर्थे इग प्रत्ययो वा भवति॥

प्रयोगः॥ पडिसणमनाचरिपं — पडिसणिगं। एवं अटमटिगं, पुसिगं, उपवासिगं, नियमिगं, प्रतिगं॥

वेत्त्यध्येत्रोः ॥408॥

वृत्तिः॥ तदिति द्वितीया समर्थाद् वेत्ति अध्येतीति वार्थे इग प्रत्ययोवाभवति॥

प्रयोगः॥ जोयिसमनरिवनोदुवं मेण्— जोयिसिगं। एवं गणिदिगं, सिद्धांतिगं, लेक्किगं, शाब्दिगं, वागरणिगं॥

क्रीणद्विक्रीणतोः ॥409॥

वृत्तिः॥ तदिति द्वितीया समर्थात् क्रीणाति विक्रीणाति वेत्यस्मिन्नर्थे इग प्रत्ययो वा भवति॥

प्रयोगः॥ तंबुलवं कोऌवं माऽुवं मेण् – तंबुलिगं। एवं दवसिगं, गंदिगं, मेणसिगं, पिप्पलिगं॥

कुर्वत्युक्किगश्च ॥410॥

वृत्तिः॥ तदिति द्वितीया समर्थात् करोतीत्यस्मिन्नर्थे उक्किग प्रत्ययश्चकारा-दिग प्रत्ययश्च वा भवतः॥ (192)

प्रयोगः॥ देवरं माडुवं – देवुक्किगं, देविगं। एवं पाकुक्किगं, पाकिगं; अडुगुक्किगं, अडुगिगं; कब्बुक्किगं, कब्बिगं; चौपदुक्किगं, चौपदिगं॥

गाऽो जातौ ॥411॥

वृत्तिः॥ तदिति द्वितीया समर्थात् करोतीत्यस्मिन्नर्थे गाऽ प्रत्ययो वा भवति जातौ विषये॥

प्रयोगः॥ मालेयं माडुवं – मालेगाऽं। एवं बळेगाऽं, ओऽेगाऽं, मणिगाऽं, गेज्जेगाऽं॥ जाताविति किम्। पाकुक्किगं, कब्बिगं॥

ऽः कम्मकुंबात् ॥412॥

वृत्तिः॥ तदिति द्वितीया समर्थात् कम्मशब्दात् कुंबशब्दाच्च करोतीत्यस्मि-न्नर्थे ऽ प्रत्ययो वा भवति जातौ विषये॥ (198)

प्रयोगः॥ कम्मवं माडुवं – कम्मऽं, कुंबवं माडुवं – कुंबऽं॥ जाताविति किम्। कम्मिगं, कुंबिगं॥ कम्मकुंबादिति किम्। असकरिगं, मदनवतिगं॥

देवादडिगोऽर्हति ॥413॥

वृत्तिः॥ तदिति द्वितीया समर्थाद् देवशब्दादर्हतीत्यस्मिन्नर्थे अडिगप्रत्ययो वा भवति॥

प्रयोगः॥ देवरं पूजिपुवं – देवडिगं॥ देवादिति किम्। मारियं पूजिपुवं-मारिगं। गाविलादित्वात् साधुः॥

गुक्किर्गृह्णाति ॥414॥

वृत्तिः॥ तदिति द्वितीया समर्थाद् गृह्णातीत्यस्मिन्नर्थे गुक्किप्रत्ययो वा भवति॥

प्रयोगः॥ लंचमं कोंबं – लंचंगुक्कि। एवं सालंगुक्कि, आटंगुक्कि, पणंगुक्कि, पण्गुक्कि, नाय्गुक्कि॥

तेन जीवति गवणिगौ ॥415॥

वृत्तिः॥ तेनेति तृतीया समर्थाच्छब्दाज्जीवतीत्यर्थे गप्रत्ययो वणिग्प्रत्ययश्च वा भवतः॥

प्रयोगः॥ लंचादिं जीविपुवं – लंचगं, लंचवणिगं। एवं मातुगं, मातुवणिगं; बूतुगं, बूतुवणिगं; ऊऱगं, ऊऱवणिगं॥ (193) (196)

वडिगो जातौ ॥416॥

वृत्तिः॥ तेनेति तृतीया समर्थाद् वडिंग प्रत्ययो वा भवति जातौ विषये॥
प्रयोगः॥ मालेयिं जीविष्ठुवं – मालेवडिंगं। एवं कंचुवडिंगं, परेवडिंगं, पूवडिंगं ॥ जाताविति किम्। पूवणिगं, परेगं ॥ (132)

पावोर्डु लुप् च ॥417॥

वृत्तिः॥ तेनेति तृतीया समर्थात् पावुशब्दाद् वडिंग प्रत्ययो वा भवति दोलोपस्च जातौ विषये॥
प्रयोगः॥ पाविं जीविसुवं – पावडिंगं॥ (132)

तत्रेगो नियुक्ते ॥418॥

वृत्तिः॥ तत्रेति सप्तमीसमर्थान्नियुक्त इत्यस्मिन्नर्थे ङ्ग प्रत्ययो वा भवति॥
प्रयोगः॥ सुंकदोळ् नियुक्तं – सुंकिगं। एवं बागिलिगं, द्वारिगं, भंडारिगं॥

भवजातयोः ॥419॥

वृत्तिः॥ तत्रेति सप्तमी समर्थाद् भव इत्यर्थे जात इत्यर्थे च ङ्ग प्रत्ययो वा भवति।
प्रयोगः॥ काळूरोळादं पुट्टिदं मेण् – काळूरिगं। एवं करहाडिगं, ओक्कूरिगं, बाणिगं, पट्टणिगं॥

इचो ह्रस्वश्चोपान्त्यस्य ॥420॥

वृत्तिः॥ तत्रेति सप्तमी समर्थाद् भव इत्यर्थे जात इत्यर्थे च इच प्रत्ययो वा भवति उपान्त्यस्य ह्रस्वश्च॥
प्रयोगः॥ काळूरोळादं-पुट्टिदं मेण् – काळुरिचं। एवं ओक्कुरिचं, बनिचं, कलिचं, करहडिचं॥ (190)

दिक्छब्दादणः ॥421॥

वृत्तिः॥ तत्रेति सप्तमी समर्थाद् दिक्छब्दाद् भवार्थे जातार्थे च अण प्रत्ययो वा भवति॥
प्रयोगः॥ मूडलादं पुट्टिदं मेण् – मूडणं। एवं तेंकणं, पडुवणं, बडगणं, नडुवणं, कडेयणं, अत्तणं, इत्तणं॥ दिक्छब्दादिति किम्। कन्नडिगं, कन्नडिचं॥ (182)

दश्चेतः ॥422॥

वृत्तिः॥ तत्रेति सप्तमी समर्था दिकारान्ताद् दिक्छब्दाद् भवार्थे जातार्थे च द प्रत्ययो वा भवति। चकारादणश्च॥
प्रयोगः॥ अल्लियादं पुट्टिदं मेण् – अल्लियणं, अल्लिदं। एवं इल्लियणं, इल्लिदं; उल्लियणं, उल्लिदं; एल्लियणं, एल्लिदं॥

कारः प्रवणव्यापृतयोः ॥423॥

वृत्तिः॥ तत्रेति सप्तमी समर्थात् प्रवण इत्यर्थे व्यापृत इत्यर्थे च कार प्रत्ययो

वा भवति ॥

प्रयोगः॥ नगेयोरु प्रवणं व्यापृतं मेण्—नगेकारः। एवं नुडिकारः, आटकारः, मोसकारः, मुंडुकारः ॥

व्यञ्जनादुगः ॥424॥

वृत्तिः॥ तत्रेति सप्तमी समर्थाद् व्यञ्जनान्ताच्छब्दाद् व्यापृतः प्रवण इति वार्थे उग प्रत्ययो वा भवति ॥

प्रयोगः॥ पेण्णोरु प्रवणं व्यापृतं मेण्—पेण्णुगं। एवं मण्णुगं, पोन्नुगं, नारुगं, पालुगं, परलुगं ॥ व्यञ्जनादिति किम्। कय्दुकारः ॥ (193)

आरतोऽधिकृते बहुकम् ॥425॥

वृत्तिः॥ तत्रेति सप्तमी समर्थादधिकृत इत्यर्थे आरत प्रत्ययो बहुकं भवति॥

प्रयोगः॥ सूळोळधिकृतं—सूळारतं। एवं बागिलारतं, अच्चुकारतं, कल्लारतं ॥ (195)

वकवक्कौ ॥426॥

वृत्तिः॥ तत्रेति सप्तमी समर्थादधिकृत इत्यर्थे वक, वक्क इत्येतौ प्रत्ययौ वा भवतः

प्रयोगः॥ पडेयोळधिकृतं—पडेवकं, पडेवक्कं। एवं सेज्जेवकं, सेज्जेवक्कं; अडपवकं, अडपवक्कं; सेनेवकं, सेनेवक्कं ॥

मडे जातौ ॥427॥

वृत्तिः॥ तत्रेति सप्तमी समर्थान्मडिशब्दादधिकृत इत्यर्थे वक, वक्क इत्येतौ प्रत्ययौ वा भवतो जातौ विषये ॥

प्रयोगः॥ मडियोळधिकृतं—मडिवकं, मडिवक्कं ॥

तस्य तुल्ये वोल्वोलौ ॥428॥

वृत्तिः॥ तस्येति षष्ठी समर्थात् तुल्यमित्यस्मिन्नर्थे वोल्, वोल् प्रत्ययौ भवतः॥

प्रयोगः॥ हरिय समानं—हरिवोल्, हरिवोल्। एवं गिरिवोल्, गिरिवोल्; विधुवोल्, विधुवोल् ॥

वातो बोल् ॥429॥

वृत्तिः॥ तस्येति षष्ठी समर्थादकारान्ताच्छब्दात् तुल्यमित्यस्मिन्नर्थे बोल् प्रत्ययो वा भवति॥

प्रयोगः॥ इंद्रन सदृशं—इंद्रंबोल्, इंद्रनवोल्, इंद्रनवोल्। एवं चंद्रंबोल्, चंद्रनवोल्, चंद्रनवोल्; अण्णंबोल्, अण्णनवोल्, अण्णनवोल्॥

भावे तनः ॥430॥

वृत्तिः॥ भवतोऽस्मादभिधान प्रत्ययाविति भावः शब्दप्रवृत्तिनिमित्तम्।

तस्येति षष्ठीसमर्थाद् भावेर्थे तन प्रत्ययो भवति॥
प्रयोगः॥ पुरुषन भावं – पुरुषतनं। एवं वीरतनं, शूरतनं, बल्लतनं, चेलूवतनं, पूकेतनं, गरतितनं॥

उन्नतादिभ्य इकेत् ॥431॥

वृत्तिः॥ षष्ठी समर्थेभ्य उन्नतादिभ्यो भावेर्थे इकेत् प्रत्ययो वा भवति॥
प्रयोगः॥ उन्नतिके, पन्नतिके, मानसिके, गरुविके, आयतिके॥
उन्नतादयः प्रयोगगम्याः॥

गुणोक्तेः पुः पूर्वस्वरेण दुलुप् च ॥432॥

वृत्तिः॥ तस्येति षष्ठीसमर्थाद् गुणवाचिनो भावेर्थे पु प्रत्ययो भवति पूर्वस्वरेण सह दोर्लोपश्च॥
प्रयोगः॥ ओक्कितर् भावं – ओक्ुपु, बिकिदर् भावं – बिक्ुपु। एवं कर्पु, तेक्ुपु, मेल्पु, सेर्पु, कूर्पु॥ गुणोक्तेरिति किम्। केकेयतनं, सुखतनं॥

सँख्याया भेद् वारे ॥433॥

वृत्तिः॥ संख्यावाचिनो भेत् प्रत्ययो भवति वारार्थे गम्यमाने॥
प्रयोगः॥ ओंदुबारि – ओम्मे। एवं इम्मे, मूम्मे, नूम्मे, सासिम्मे॥

परिमाणाच्चानेयः पूरणे ॥434॥

वृत्तिः॥ संख्यावाचकात् परिमाणवाचकाच्च शब्दात् पूरणेर्थे अनेय् प्रत्ययो भवति॥
प्रयोगः॥ ओंदर् पूरणं – ओंदनेयं। एवं अेरडनेयं, मूरनेयं, नाल्कनेयं, अनितनेयं, इनितनेयं, ओनितनेयं॥

अद्रि दूदो नितुः परिमाणे दोर्लुप् च ॥435॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेभ्यो नितु प्रत्ययो भवति परिमाणेर्थे गम्यमाने दोर्लोपश्च॥
प्रयोगः॥ अनितु, इनितु, उनितु॥ (171)

अेवरमेवरेगं कालस्य नश्च ॥436॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेभ्यः अेवरं, अेवरेगं इत्येतौ प्रत्ययौ भवतः कालपरिमाणे द्योत्ये दोर्नकारादेशश्च॥
प्रयोगः॥ अन्नेवरं, अन्नेवरेगं; इन्नेवरं, इन्नेवरेगं; उन्नेवरं, उन्नेवरेगं॥ कालस्येति किम्। अनितु, इनितु, उनितु॥

प्रकारे तुट्टुतेतवः ॥437॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेभ्यः तुट्टु, ते, तु इत्येते प्रत्यया

भवन्ति दोर्नकारादेशश्च प्रकारे गम्यमाने ॥
प्रयोगः॥ अंतुट्टु, अंते, अंतु ; इंतुट्टु, इंते, इंतु ; उंतुट्टु, उंते, उंतु ॥

काले दुः ॥438॥

वृत्तिः॥ अदु, इदु, उदु इत्येतेभ्यो दुप्रत्ययो भवति दोर्नकारादेशश्च काले गम्यमाने ॥
प्रयोगः॥ अंदु, इंदु, उंदु ॥

अेनावुदोरेतेषु ॥439॥

वृत्तिः॥ आवुदुशब्दस्य अेन् इत्यादेशो भवति अेवरं, अेवरेगं, तुट्टु, ते, तु, दु इत्येतेषु प्रत्ययेषु परतः॥
प्रयोगः॥ अेन्नेवरं, अेन्नेवरेगं; अेंतुट्टु, अेंते, अेंतु, अेंदु ॥

अेद् नितौ ॥440॥

वृत्तिः॥ आवुदु शबदस्याधैकारादेशो भवति नितु प्रत्यये परे ॥
प्रयोगः॥ अेनितु ॥

गाविलादीनि यथोपदिष्टम् ॥441॥

वृत्तिः॥ गाविलादयः शब्दा यथोपदेशं साधवो वेदितव्याः॥
प्रयोगः॥ गाविलं, नाविलं, घोळयिलं, घोळायिलं, पदयिलं, पच्चयिलं, तट्टुकं, चट्टुकं, पट्टुकं, कट्टुकं, अंटुकं, सणुकं, सण्णुकं, बोंडुकं, पिंडुकं, पेंकुकि, बारिकं, नसिकं, कुसिकं, गरवटिगं, कोल्लटिगं, गळेवटिगं, दीवटिगं, नीर्वट्टिगं, आयकुक्कि इति गाविलादिराकृतिगणः॥

इति श्री भट्टाकलंकदेव विरचितायां भाषामञ्जरी समाख्यायां शब्दानुशासनवृत्तौ तृतीयः पादः॥

धातोरेकानेकत्वेऽमरयिरेनेववोऽन्ययुष्मदस्मासु कर्तरि ॥442॥

वृत्तिः॥ अन्य युष्मदस्मदर्थे प्रत्येकमेकत्वानेकत्वयोर्विवक्षितयोर्यथाक्रमं धातोः अम्, अर्, अय्, इर्, अेन्, अेवु एते प्रत्यया भवन्ति कर्त्रभिधेये ॥ अन्यत्वं च युष्मदस्मदपेक्षं सन्निधानात् । अन्यस्मिन्नेकत्वे अम् । अनेकत्वे अर् ॥ एवं युष्मदर्थे प्येकत्वे अय् । अनेकत्वे इर् । तथैवास्मदर्थे प्येकत्वे अेन् । अनेकत्वे अेवु ॥
प्रयोगः॥ तानिर्दं, तामिर्दर् ; नी निर्दय्, नीमिर्दिर् ; आनिर्दें, आमिर्देवु ॥ अन्य युष्मदस्मदामप्रयोगेपि तदर्थे विवक्षायां भवन्ति॥ नोडिदं, नोडिदर् ; नोडिदय्, नोडिदिर् ; नोडिदें, नोडिदेवु ॥

देवदत्तनं कंडें, देवदत्तनं कंड्य्; निन्नं कंडं, निन्नं कंडें; ओन्नं कंडं, ओन्नं कंड्य् इत्यादावन्य युष्मदस्मदां प्रयोगेपि व्यधिकरणत्वादमादयो न भवन्ति ॥ ओनो दीर्घमपि केचिदिच्छन्ति ॥

वृ ॥ तनिवण्णं लंचमीवें पुरुक्कि निनगे पूगोंचलं बेगर्दिदं ।
निनगीवें तुंबि केंदावरेय मिधुप मेल्मोग्गेयं माणदेंदुं ॥
निनगीवेंनचेकंपं निनगोलयिधुवें बूडेतेंगाक्कियेन्नो ।
पननिंदारय्दु तंदेन्नोडनिरिसिदोडेंदाके मातािडुतिर्प्पळ् ॥

आतनुं नीनुमिर्द्दिर्, आतनुमानुमिर्द्देवु, आनुमातनुमिर्द्देवु इत्यत्र शब्द परविप्रतिषेधात् पराश्रय एव भवति ॥

## कर्मणि ॥443॥

वृत्तिः ॥ अन्य युष्मदस्मदर्थेषु प्रत्येकमेकत्वानेकत्वयोर्विवक्षितयोर्यथाक्रमं धातोः अम्, अर्, अय्, इर्, ओन्, ओवु एते प्रत्यया भवन्ति कर्मणि चाभिधेये ॥ (कर्मणि = in the passive)

प्रयोगः ॥ तानिरल्पट्टं, तामिरल्पट्टर्; नीनिरल्पट्टय्, नीमिरल्पट्टिर्; आनिरल्पट्टें, आमिरल्पट्टेवु ॥ योगविभाग उत्तरार्थः ॥

## बेड्वादेरप्रधाने ॥444॥

1.6.93 1.17pm

वृत्तिः ॥ अन्याद्यर्थविवक्षायां बेडु इत्येवमादिभ्यो धातुभ्यः अप्रधाने कर्मण्यमादयो भवन्ति ॥ [The personal endings of bēḍu etc in the passive agree with an indirect object.]

प्रयोगः ॥ पार्थ्वनिनरसं ग्रामभं बेडल्पट्टं । एवं गोवळनिंदेम्मैं पालं करेयल्पट्टुदु, उपाध्यायं शिष्यरिं तत्वमं बेसगोकल्पट्टं, बेंडुकारनरसनिं सुद्दियं केळल्पट्टं ॥

## इसुपः प्रयोज्यकर्तरि ॥445॥

वृत्तिः ॥ अन्याद्यर्थविवक्षायां इसुबन्तेभ्यो धातुभ्यः प्रयोज्य कर्त्रात्मके कर्मण्यमादयो भवन्ति ॥

प्रयोगः ॥ तुरुगकूरनेय् दिसल्पट्टुवु गोवळनिं, गुरुगळिनरसं धर्ममनरियिसल्पट्टं, अरसनिंनां पेर्च्चिसल्पट्टें ॥ प्रयोज्य कर्तरीति किम् । ग्रामादेर्मा भूत् ॥ कर्मणीति किम् । कृष्णनिंनर्जुननिं कर्णं कोलिसल्पट्टं ॥

## दपदवं तिङि सद्भूतभाविनि ॥446॥

वृत्तिः ॥ सति भूते भाविनि च काले विवक्षिते यथाक्रमं धातोः दप, द, व इत्येते प्रत्यया भवन्ति तिङि परे ॥ (सति = in the present)

प्रयोगः ॥ इर्द्दपं, इर्द्दं, इर्व्वं; नोडिदपं, नोडिदं, नोडुवं; कूडिदपं, कूडिदं, कूडुवं ॥ तिङीति किम् । इरवु, इर्क्कें ॥

## अचि ॥447॥

वृत्तिः॥ सति भूते भाविनि च काले विवक्षिते यथाक्रमं धातोः दप, द, व इत्येते प्रत्यया भवन्त्यचि परे॥ (अच् - gerundial affix)

प्रयोगः॥ नोडिदपनं, नोडिदनं, नोडुवनं; माडिदपंगे, माडिदंगे, माडुवंगे॥

योग विभाग उत्तरार्थः॥

व्याख्या॥ सदादि काल त्रये दपादि प्रत्ययत्रयमुक्तम्। तत् तु न केवलं तिङ्येव परत इत्येकान्तः। किन्त्वच् कर्तृकर्मणोः (543) इति कृत्संज्ञकोऽच् प्रत्ययो वक्ष्यते। तस्मिन् परतोऽपि भवतीत्याह सतीत्यादि॥ ..

## सति वो वा ॥448॥

वृत्तिः॥ वर्तमानकाले विवक्षिते धातोर्व प्रत्ययो वा भवत्यचि परे॥

प्रयोगः॥ नोडुवनं, नोडिदपनं; कूडुवंगे, कूडिदपंगे; इर्प्पन, इद्दपन॥

## ओनोदुवुदुक्तौ ॥449॥

वृत्तिः॥ ओन्, ओत्, उवु, उदु, अक्, अतु एतेषु परेषु सदादि कालविवक्षायां धातोर्दपादयो भवन्ति॥

प्रयोगः॥ आमिदं माडिदपें, माडिदें, माडुवें; नीनिदनेंतु नंबिदपो, नंबिदो, नंबुवो; तामिदं माडिदपुवु, माडिदुवु, माडुवुवु; तानिदं नोडिदपुदु, नोडिदुदु, नोडुवुदु; कांते नोडिदपक्, नोडिदक्, नोडुवक्; तानिदं माडिदत्तु॥ प्रतिषेधयिष्यत्यादेशे (452) इति। तस्यायं पुरस्तादपवादः। अतएवात्र ओनध्यादिष्ट एव ग्राह्यः॥

## नोक्स्सत्तायाम् ॥450॥

वृत्तिः॥ सत्तायामर्थे वर्तमानादुक् इत्यस्माद् धातोस्सदादिकाल विवक्षायां दपादयो न भवन्ति तिङ्यचि च परे॥

प्रयोगः॥ तिङि। ओकं, ओकर्, ओकय्, ओकिर्, ओकें, ओकेवु॥ अचि। ओकनं, ओकनिं, ओकंगे॥ उक इति किम्। संभविसिदपं, संभविसिदं, संभविसुवं॥ सत्तायामिति किम्। उक्तपं, उक्तं, उक्वं। उक्त्र हल विलेखने॥

## बलोऽवबोधने ॥451॥

वृत्तिः॥ अवबोधनार्थे वर्तमानाद् बल् इत्यस्माद् धातोस्सदादिकाल विवक्षायां दपादयो न भवन्ति तिङ्यचि च परे॥

प्रयोगः॥ बल्लं, बल्लर्, बल्लय्, बल्लें, बल्लेवु; बल्लनं, बल्लनिं, बल्लंगे॥ बल इति किम्। अरिदपं, अरिदं, अरिवं॥ अवबोधन इति किम्। बल्लुदु मोसर्, बल्लुदु तुप्पं। कठिनमभूदित्यर्थः॥

## आदेशे ॥452॥

वृत्तिः॥ धातोर्दपादयो न भवन्त्यादेशे तिङ्यचि च परे॥
प्रयोगः॥ माड्तु, माड्न्तु; माक्कुं, माड्गुं; माक्कुगुं, माड्गुगुं; माक्के, माड्गे; माक्पुदु, माड्वुदु; माड, माड्; माक्पुदु, माड्वुदु, माडिं, माड्वें, माड्वें; माड्ते, माड्न्ते; माड्तुं, माड्न्तुं॥ आदेश इति किम्। माडिदपिर्, माडिदिर्, माड्विर्॥

अकमः स्त्रियाम् ॥453॥

वृत्तिः॥ धातोर्विहितस्यामः अळित्यादेशो भवति स्त्रियां विषये॥
प्रयोगः॥ साति नोडिदपळ्, नोडिदळ्, नोड्वळ्; कूडिदपळ्, कूडिदळ्, कूड्वळ्॥ अम इति किम्। सातियन्नोडिदर्, कूडिदर्॥ स्त्रियामिति किम्। आतं नोडिदं, कूडिदं॥

नप्युदुः ॥454॥

वृत्तिः॥ धातोर्विहितस्याम उदुरादेशो भवति नपुंसकलिङ्गविषये॥
प्रयोगः॥ गिळियोदिदपुदु; ओदिदुदु, ओदुवुदु; अळिपाडिदपुदु, पाडिदुदु, पाडुवुदु॥ अम इति किम्। अलेगिळियोदुवय्, अलेतुं बिपाडुवय्॥ नपीति किम्। पार्व्वनोदुवं, गायकं पाडुवं॥
व्याख्या॥ अम इत्येव॥

अचः ॥455॥

वृत्तिः॥ धातोर्विहितस्याच उदुरादेशो भवति नपुंसकलिङ्गविषये॥
प्रयोगः॥ ओदिदुदं, ओदिदुदरिं, ओदिदुदक्कें; पाडिदुदं, पाडिदुदरिं, पाडिदुदक्कें॥ नपीति किम्। ओदुवनं, ओदुवंगे; पाडुवकं, पाड्वक्गे॥ योग विभाग उत्तरार्थः॥

उवुरनेकत्वे ॥456॥

वृत्तिः॥ धातोर्विहितस्याच उवुरादेशो भवत्यनेकत्वे नपुंसकलिङ्गविषये॥
प्रयोगः॥ ओदुवुवं, ओदुवुवरिं, ओदुवुवक्कें। एवं पाड्वुवं, पाड्वुवरिं, पाड्वुवक्कें॥ अनेकत्व इति किम्। पाडिदुदं, ओदुवुदं॥
व्याख्या॥ अचो नपीति चानुवर्तनीयम्॥

अरः ॥457॥

वृत्तिः॥ धातोर्विहितस्यार उवुरादेशो भवति नपुंसकलिङ्गविषये॥
प्रयोगः॥ गिळिगळोदिदुवु, ओदिदपुवु, ओदुवुवु। एवं तुंबिगळ्पाडिदपुवु, तुंबिगळ्पाडिदुवु, पाड्वुवु॥ नपीति किम्। ओदिदर्, पाडिदर्॥
व्याख्या॥ उवुर्नपीति चानुसंधेयम्॥

वैकल्पित्वत्त वोऽमो भूते ॥458॥

वृत्तिः॥ धातोरतीतकाले विहितस्याम इतु, इत्तु, अत्तु एते आदेशा वा भवन्ति नपुंसकलिङ्गविषये॥
प्रयोगः॥ गिकियोदितु, ओदितु, ओदित्तु, ओदिदुदु। एवं अकिपाडितु, पाडित्तु, पाडित्तु, पाडिदुदु॥ अम इति किम्। ओदिदय्, पाडिदय्॥ भूत इति किम्। गिकियोदिदपुदु, ओदुवुदु; अकि पाडिदपुदु, पाडुवुदु॥ नपीति किम्। पाडिदं, पाडिदक्॥

## उदुवोष्ट्वक्रुकस्सत्तायाम् ॥459॥

वृत्तिः॥ सत्तायामर्थे वर्तमानात् उक् इत्यस्माद् धातोः परयोः उदु, उवु इत्येतयोर्यथासंख्यं टु, क्कु इत्यादेशौ भवतः॥
प्रयोगः॥ पणमुण्टु, कुदुरेगळोक्कु॥ उदुवोरिति किम्। ओकय्, ओकिर्॥ उक इति किम्। संभविसिदुदु, संभविसुवुदु॥ सत्तायामिति किम्। उक्तुदेक्तु, उक्तुवेक्तुगळ्॥

## औरत् प्रतिषेधे ॥460॥

वृत्तिः॥ उदुवोरिति वर्तते॥ धातोः परस्य उदु, उवु इत्येतयोरुकारस्य अकारादेशो भवति प्रतिषेधे गम्यमाने॥
प्रयोगः॥ पाडदुगिकि, पाडवुगिकिगळ्; ओददु गिकि, ओदवुगिकिगळ्॥ उदुवोरिति स्थानि नियमार्थम्। ओ रित्यादेरेव यथा स्यादिति। अन्त्यस्य तु व्यवहितत्वाद्वैयर्थ्याच्च न भवति॥ प्रतिषेध इति किम्। माडिदुदु, माडुवुदु॥

## ओदयो वा ॥461॥

वृत्तिः॥ धातोर्विहितस्य अय् इत्येतस्य ओकारादेशो वा भवति प्रतिषेधे गम्यमाने॥
प्रयोगः॥ देहगनिदनेंतु निच्चटं नंबिदवो, नंबिदपय्— देहं स्थिरत्वेन मा विश्वसिहीत्यर्थः। एवं ओंतु नंबिदो, ओंतुनंबिदय्, ओंतुनंबुवो, ओंतु नंबिवय्॥ अय इति किम्। ओंतु नंबिदर्, नंबिदपिर्, नंबुविर्॥ प्रतिषेध इति किम्। ऊटमं माडिदय्॥

## अेवोरेन् ॥462॥

वृत्तिः॥ प्रतिषेध इति निवृत्तम्॥ धातोर्विहितस्य अेवु इत्येतस्य अेन् इत्यादेशो वा भवति॥
प्रयोगः॥ आमिदं कंडेवु, कंडें; नोडिदपेवु, नोडिदपें; माळ्पेवु, माळ्पें॥ अेवोरिति किम्। तानिदं माडिदं, तामिदं माडिदर्॥

## अमरोर्गुम् ॥463॥

वृत्तिः॥ धातोः परयोः सतिभूते भविष्यति च काले विहितयोः अम्, अर् इत्येतयोर्गुम् इत्यादेशो वा भवति पुल्लिङ्गे स्त्रीलिङ्गे नपुंसकलिङ्गे च विषये ॥

प्रयोगः॥ सति तावत् पुंसि। मुडुगुमीगळ् सुरेन्द्रगिरियोळ् दिनपं, मूडिदपं दिनपनुदयगिरिमस्तकदोळ्; श्रुतमं नोडुगुमुदारचरितम्मुनिपर्, श्रुतमं नोडिदपरमलचरितम्मुनिपर् ॥ स्त्रियाम्। ओल्दुंजनकात्मजातेयीगळ्नोडा, ओल्दपळा जनकपुत्रियीगळ्नोडा, पाडुगुमीजिनपनिदिरोळमरांगनेयर्, पाडिदपर्जिनपनिदिरोळमरांगनेयर् ॥ नपि। काडुगुमीमत्त हस्ति समरांगणदोळ्, कादिदपुदु मत्त हस्ति समरांगणदोळ्; काडुगमतिभरदे कुदुरेगळ् भंडणदोळ्, कादिदपुवु भरदेकुदुरेगळ् भंडणदोळ् ॥ भूते पुंसि। निन्ने पुट्टुगुं कलिरामं, निन्ने पुट्टिदं कलिरामं; बलराममम्मोन्ने माडुगुं बलिबधमं, बलराममम्मोन्ने माडिदबलिवधमं ॥ स्त्रियाम्। पिंतेकाण्गुमवळ्जर्जुननं, पिंते कंडळवळ्जुननं; निन्न निन्ने काण्गुं सतियर्, निन्न निन्ने कंडर् सतियर् ॥ नपि। अंदु पुट्टुगुं नेलनजनिं, अंदुपुट्टितीनेलनजनिं; पोळ्गुं बल्लिरिगळंदु वज्राहतियिं, पोळ्दुवु बल्लिरिगळंदु वज्राहतियिं ॥ भविष्यति पुंसि। नाळे पुट्टुगुं श्रीकृष्णं, नाळे पुट्टुवं श्रीकृष्णं; नाळे पुट्टुगुं बलरामर्, नाळे पुट्टुवर्बलरामर् ॥ स्त्रियाम्। नाळे पुट्टुगुं सुते केळदी, नाळे पुट्टुवळ् सुते केळदी; नाळे पुट्टुगुं बह्सुतेयर्, नाळे पुट्टुवर्बहुसुतेयर् ॥ नपि। नाळे पुट्टुगुं कुचयुगळं, नाळे पुट्टुवुदु कुचयुगळं; नाळे पुट्टुगुं बल्मोलेगळ्, नाळे पुट्टुवुवु बल्मोलेगळ् ॥

गुगुमेकेषाम् ॥464॥

वृत्तिः॥ धातोः परयोः सदादिकाले विहितयोः अम्, अर् इत्येतयोर्गुगुम् इत्यादेशो भवत्येकेषामाचार्याणां मते ॥

प्रयोगः॥ गायकं पाडुगुगुं, गायकर्पाडुगुगुं; नच्चणि कुणिगुगुं, नच्चणियर्कुणिगुगुं; गिळियोदुगुगुं, गिळिगळोदुगुगुं ॥ एकेषां ग्रहणं विकल्पार्थम्। तेन पक्षे यथायोगं भवति। पाडुगुं, पाडिदपं; पाडुगुं, पाडिदं; पाडुगुं, पाडुवं ॥

आशीर्विधिनिमन्त्रणामन्त्रणाध्येषणसम्प्रश्नप्रेषणविज्ञापनाज्ञापनप्रार्थने गेत् ॥465॥

वृत्तिः॥ वेति निवृत्तम् ॥ इष्टार्थस्याशंसनमाशीः ॥ विधिर्नियोगः कर्तव्योपदेशो वा ॥ नियोगतः कर्तव्यं क्रियास्वाभिमुख्यकरणं वा

निमन्त्रणम् ॥ कामचारतः कर्तव्यं कर्तव्येष्वनुज्ञापनं वा आमन्त्रणम् ॥ सत्कार पूर्वको व्यापारोऽध्येषणम् ॥ कर्तव्यालोचनं सम्प्रश्नः ॥ क्षीणं प्रतिकर्म प्रतिपादनं प्रेक्षणं ॥ अधिकं प्रतिकर्म प्रतिपादनं विज्ञापनं ॥ विहितकर्म प्रतिपादनमाज्ञापनं ॥ याच्ञा प्रार्थना ॥ आशीरादि विवक्षायां धातोः परयोः अम्, अर् इत्येतयोर्गे दित्यादेशो भवति ॥

प्रयोगः॥ आशिषि । तर्कै सुगासन्मति कुमुदिनियं नेमिचंद्रं जिनेन्द्रं, चतुर्विंशति देवर्द्दयेगेय् गे विमल रत्न त्रियमं ॥ विधौ । देवरं पूजिसुगे बुधं, तत्वमं नंबुगे विभुधर् ॥ विमन्त्रणे । संजेयोळ् नियमं माड्गे, व्रतमं यथाक्रममोदुगे ॥ आमन्त्रणे । बुभुक्षु भोजनंगेय्गे, पंडितर् प्रसंगंगेय्गे॥ अध्येषणे । उपाध्यायं माणवकननोदिसुगे, पुरोहितर् माणवकनं श्रौतमनोदिसुगे ॥ सम्प्रश्ने । पुत्रं व्याकरणमनोदुगे मेण् वेदमनोदुगे, श्वर् नाटकमनोदुगे मेण लंकारमनोदुगे ॥ प्रेषणे । मल्लं मेय्नोन्तुगे, बंटरुकिगंगेय्गे ॥ विज्ञापने । अरसनिदं माड्गे, गुरुगळिदं पालिसुगे ॥ आज्ञापने । प्रजेगळिंतु नडेगे, यतिगळिंताचरिसुगे ॥ प्रार्थनायां । ओम्मणीतं भिक्षमं कुडुगे, ओम्मगं गिवर्पोण्णं कुडुगे ॥ आशीरादाविति किम् । आतं बंदं, ईतं पोदं ॥

इरस्च वुदुः ॥466॥

वृत्तिः ॥ धातोः परयोः अम् अर् इत्येतयोः इर् इत्यस्य च वुदुरित्यादेशो भवति आशीरादि विषये ॥

प्रयोगः॥ जिननेमगे सुखमं माड्वुदु, गुरुगळेमगे तत्वमं बेससुवुदु, नीमेमग भीष्टम नीवुदु, तानिदं माळ्पुदु, तामिदं माळ्पुदु, नीमिदं माळ्पुदु ॥

इम् ॥467॥

वृत्तिः॥ धातोः परस्य इर इमित्यादेशो भवत्याशीरादि विषये ॥

प्रयोगः॥ गुरुगळिरा मुददिनेमगे बेससिं कथेयं, शिव सुखमं माडिमेमगे परम जिनेंद्रर ॥

अयोऽल्लुपौ ॥468॥

वृत्तिः ॥ धातोः परस्य अयः अकारो लोपश्चादेशौ भवतः आशीरादिविषये॥

प्रयोगः॥ जिनेश दयेगेय्य विमलरत्न त्रयमं, दयेगेय् नीनेमगे सौख्यमं जिनराजा, मनदोलविम्माडसं पदंगळनरुहा, मनदोलविं माड्ड संपदंगळन् अरुहा ।

वृ० ॥ बार मराळिकागमने नोड चकोर विलोल नेत्रे निं-।

दास्य पीवर स्तन नितंब भरालसे बेक काम का-॥
ळोरग केश पाशे येनगुत्तरमं कुडु चारु वेणि वी-।
णा रवे नीनदार मगके ल्लिगे पोदपे यावुदाश्रयं॥

उच्चेरः ॥469॥

वृत्तिः॥ इर् इत्यस्माद् धातोः परस्य अयः अकारो लोप उकारश्चादेश। भवन्त्याशीरादि विषये॥
प्रयोगः॥ नीनिर, नीनिर्, नीनिरु।

कं०॥ इरु मगके शुष्क वैया-।
करणंगं शुष्क तार्किकंगं बेक्क-॥
वकरिगंगं विषयमे का-।
व्यरत्नमति चतुर कवि कदंबक विषयं॥

इर इति किम्। माड, माडु॥

अेवोर्वम् ॥470॥

वृत्तिः॥ धातोः परस्य अेवु इत्यस्य वम् इत्यादेशो भवत्याशीरादिविषये॥
प्रयोगः॥ आमेल्लरुमीगळखमेधंगेय्वं, आनुं नीनुमीनों पियं माळ्पं॥

अेनो वेन् ॥471॥

वृत्तिः॥ धातोः परस्य अेन् इत्यस्य वेन् इत्यादेशो भवत्याशीरादि विषये॥
प्रयोगः॥ आनिदं माळ्पें, आं जिननं पूजिसुवें॥

आगुपोगिवसुब् रलळनणो गः कः ॥472॥

वृत्तिः॥ आगु, पोगु इत्येताभ्यां इसुबन्तेभ्यो रेफ लकार, ळकार, नकार, णकारान्तेभ्यश्च धातुभ्यः परस्य गकारस्य ककारादेशो वा भवति॥
प्रयोगः॥ अक्कुं, आगुगुं; अक्कुगुं, आगुगुगुं; अक्के, आगुगे; पोक्कुं, पोगुगुं; पोक्कुगुं, पोगुगुगुं; पोक्के, पोगुगे; माडिक्कुं, माडिसुगुं, माडिक्कुगुं, माडिसुगुगुं; माडिके, माडिसुगे; रागिक्कुं, रागिसुगुं; रागिक्कुगुं, रागिसुगुगुं; रागिके, रागिसुगे; सोर्क्कुं, सोर्गुं; सोर्क्कुगुं, सोर्गुगुं; सोर्क्के, सोर्गे; बेदर्क्कुं, बेदर्गुं; बेदर्क्कुगुं, बेदर्गुगुं; बेदर्क्के, बेदर्गे; निल्कुं, निल्गुं; निल्कुगुं, निल्गुगुं; निल्के, निल्गे; बाळ्कुं, बाळ्गुं; बाळ्कुगुं, बाळ्गुगुं; बाळ्के, बाळ्गे; माळ्कुं, माळ्गुं; माळ्कुगुं, माळ्गुगुं; माळ्के, माळ्गे; नोंकुं, नोंगुं; नोंकुगुं, नोंगुगुं; नोंके, नोंगे; माण्कुं, माण्गुं; माण्कुगुं, माण्गुगुं; माण्के, माण्गे॥ एतेभ्य इति किम्। माडुगुं, माडुगुगुं, माडुगे॥ ग इति किम्। आगुवुदु, पोगुवुदु; आगिं, पोगिं॥

अवुतवोरिद् वि ॥473॥

वृत्तिः॥ अवु, तवु इत्येतयोर्धात्वोरिकारादेशो भवति वकारादौ प्रत्यये परे॥
प्रयोगः॥ अविपं, अविपुदु; तविपं, तविपुदु; अविपिनं, तविपिनं॥ अनयोरिति किम्। माडुवं, कूडुवं॥ वीति किम्। अवुकुलि, तप्पं॥ (513)

पण उङ् नियोगे ॥474॥

वृत्तिः॥ नियोगार्थे वर्तमानस्य पण् इत्यस्य धातोरुगागमो भवति वकारादौ प्रत्यये परे॥
प्रयोगः॥ पण्णुवं, पण्णुविनं, पण्णुवन्नं॥ पण इति किम्। छुचिछुवं, छुचिलुविनं॥ नियोग इति किम्। पण्वुदु, पण्विनं॥ वीति किम्। पण्णिदं, पण्तुदु॥

5/6/93 9.05

णिग् दि ॥475॥

वृत्तिः॥ नियोगार्थे वर्तमानस्य पण्धातोर्णिगागमो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ पण्णिदं, पण्णिदपं, पण्णिदुदु, पण्णिदक्॥ दीति किम्। पण्णुते, पण्णुत्ते॥ नियोग इति किम्। पण्तुदु, पण्तपुदु॥
व्याख्या॥ (53), (69), (476), (25)

इदुतः ॥476॥

वृत्तिः॥ उकारान्तस्य धातोरिकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ माडिदं, नोडिदं, बेससिदं; माडिदपं, नोडिदपं, बेससिदपं॥
उत इति किम्। तेगेदं, बगेदं॥ दीति किम्। माडुवं, कूडुवं॥

ईसस्तग्घ्रस्वश्च ॥477॥

वृत्तिः॥ ई, सा इत्येतयोर्धात्वोस्तगागमो भवति ह्रस्वादेशश्च दकारादौ प्रत्यये परे॥
प्रयोगः॥ इत्तं, इत्तपं, इत्तु; सत्तं, सत्तपं, सत्तु॥ ई सा इति किम्। कोदं, कोदपं॥

कीकेक्बीकाक्काणः ॥478॥

वृत्तिः॥ कीक्, ओक्, बीक्, आक्, काण् इत्येतेषां धातूनां ह्रस्वादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ किक्तं, किक्तपं, किक्तु; ओक्दं, ओक्दपं, ओक्दु; बिक्दं, बिक्दपं, बिक्दु; अक्दं, अक्दपं, अक्दु; कण्डं, कण्डपं, कण्डु॥
एषामिति किम्। बाक्दं, पूक्दं॥ दीति किम्। कीक्वं, ओक्वं, बीक्वं, आक्वं, काण्वं॥
व्याख्या॥ (518)

बेमीनोर्नक् च ॥479॥

वृत्तिः॥ बे, मी, नो इत्येतेषां धातूनां ह्रस्वादेशो भवति नगागमश्च दकारादौ प्रत्यये परे॥
प्रयोगः॥ बेंदं, बेंदपं, बेंदु; मिंदं, मिंदपं, मिंदु; नोंदं, नोंदपं, नोंदु॥
बेमीनोरिति किम्। तेदं, झोदं॥ दीति किम्। बेवं, मीवं, नोवं॥ (80)

तवोर्दोः पः ॥480॥

वृत्तिः॥ तवु इत्यस्य धातोर्दोः पकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ तप्पं, तप्पपं॥ तवोरिति किम्। अविदं॥ दीति किम्। तविपं॥ दोरिति वकारस्यापि यथास्यादिति॥

मुदोस्तः ॥481॥

वृत्तिः॥ मुदु इत्यस्य धातोर्दोस्तकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ मुत्तं, मुत्तपं, मुत्तु॥

मिदेरवघाते ॥482॥

वृत्तिः॥ अवघातेऽर्थे वर्तमानस्य मिदे इत्यस्य धातोर्दोस्तकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ मित्तं, मित्तपं, मित्तु॥ मिदेरिति किम्। कुम्मिदं, कुम्मिदपं॥
अवघात इति किम्। मिदिदं, मिदिदक् — पद्भ्यां हस्तेन वा अमर्दयदित्यर्थः॥
दीति किम्। मिदिपं, मिदिवक्॥

अेक्‌चरुवासरुबेसरोः ॥483॥

वृत्तिः॥ अेक्चरु प्रभृतीनां धातूनां दोस्तकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ अेक्चत्तं, अेक्चत्तपं, अेक्चत्तु; आसत्तं, आसत्तपं, आसत्तु; बेसत्तं, बेसत्तपं, बेसत्तु॥ एषामिति किम्। केदरिदं, बेदरिदं॥

रोर्लघ्वादेर्द्विस्वरस्य ॥484॥

वृत्तिः॥ लघ्वादीनां द्विस्वराणां रुशब्दान्तानां धातूनां दोस्तकारादेशो भवति दकारादौ प्रत्यये परे॥
प्रयोगः॥ तेत्तं, तेत्तपं, तेत्तु; केत्तं, केत्तपं, केत्तु; पोत्तं, पोत्तपं, पोत्तु॥
रोरिति किम्। इरिदं, तिरिदं॥ लघ्वादेरिति किम्। मारिदं, पेरिदं॥
दिस्वरस्येति किम्। अकरिदं, पेक्करिदं॥ दीति किम्। तिरुवं, किरुवं, पोरुवं॥

गोः कः ॥485॥

वृत्तिः॥ लघ्वादीनां द्विस्वराणां गुशब्दान्तानां धातूनां दोः ककारादेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ पोक्कं, पोक्कपं, पोक्कु; मिक्कं, मिक्कपं, मिक्कु; नक्कं, नक्कपं, नक्कु॥ गोरिति किम्। उगिदं, सुगिदं॥ लद्वादेरिति किम्। कूगिदं, बागिदं॥ द्विस्वरस्येति किम्। हरगिदं, मसगिदं॥ दीति किम्। पोगुवं, मिगुवं, नगुवं॥ (489)

सोश्चः ॥486॥

वृत्तिः॥ लद्वादीनां द्विस्वराणां सु शब्दान्तानां धातूनां दोश्चकारदेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ ओच्चं, ओच्चपं, ओच्चु; बेच्चं, बेच्चपं, बेच्चु॥ सोरिति किम्। बसिदं, हसिदं॥ लद्वादेरिति किम्। हासिदं, बीसिदं॥ द्विस्वरस्येति किम्। अडसिदं, अलसिदं॥ दीति किम्। इसुवं, बिसुवं॥ (490)

डोष्टः ॥487॥

वृत्तिः॥ लद्वादीनां द्विस्वराणां डुशब्दान्तानां धातूनां दोष्टकारादेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ इट्टं, इट्टपं, इट्टु; पट्टं, पट्टपं, पट्टु; बिट्टं, बिट्टपं, बिट्टु॥ डोरिति किम्। मडिदं, कडिदं॥ लद्वादेरिति किम्। माडिदं, कूडिदं॥ द्विस्वरस्येति किम्। हरडिदं, कदडिदं॥ दीति किम्। इडुवं, पडुवं॥ (434)

पडलिड्वादेः ॥488॥

वृत्तिः॥ पडलिड्वादीनां धातूनां दोष्टकारादेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ पडलिट्टं, पडलिट्टपं, पडलिट्टु; पोडमट्टं, पोडमट्टपं, पोडमट्टु॥ पडलिडु, पोडमडु, मुंबिडु, ओडंबडु, मुगुवडु, करुविडु, तिट्टविडु, दाक्किडु, गोक्किडु, ऊकिडु, दूकिडु, माक्किडु, बेप्पडु, नेर्पुडु इति पडलिड्वादिः॥

उगुपुगुकुडुतुडोरोद्ध्रस्वः ॥489॥

वृत्तिः॥ उगवादीनां धातूनां ह्रस्वौकारादेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ ओक्कं, ओक्कपं, ओक्कु; पोक्कं, पोक्कपं, पोक्कु; कोट्टं, कोट्टपं, कोट्टु; तोट्टं, तोट्टपं, तोट्टु॥ एषामिति किम्। उट्टं, सुट्टं॥ ह्रस्व इत्यनन्त्यस्यैव यथा स्यादिति॥

व्याख्या॥ (485), (487), (22)

इसुबिसुगिरुकिरुकिडोरेत् ॥490॥

वृत्तिः॥ ह्रस्व इति वर्तते॥ इस्वादीनां धातूनां ह्रस्वैकारादेशो भवति दकारादौ प्रत्यये परे॥

प्रयोगः॥ ओच्चं, ओच्चपं, ओच्चु; बेच्चं, बेच्चपं, बेच्चु; गेत्तं, गेत्तपं, गेत्तु; केत्तं, केत्तपं, केत्तु; केट्टं, केट्टपं, केट्टु॥ ह्रस्वग्रहणं पूर्ववत्॥

(486), (484), (487)

